न्यथाकारकत्वस्यैवानुपपत्तेर्नतु फले निराकांक्षत्वादिति भावः तदनुसारि लौकिकन्यायमप्युपन्यस्यति नहि भिक्षुक इत्यादि मीमांसकाश्रपीति उक्तन्यायेन कारकप्रकारकबोधं प्रत्याख्यातजन्यभावनोपस्थितेर्हेतुतायाः क्लृप्तत्वादिति भावः॥ ७॥ ॥कारकादीत्यादिना लडाद्यर्थकालपरिग्रहः गुणभूतेति तज्जाद्यर्थकर्त्रादिविशेषणीभूतेत्यर्थः एतेन पूर्वोक्तन्यायस्य तत्रासंभवो दर्शितः तस्यामेवेति धात्वर्थभावनायामेवेत्यर्थः प्रपंचितमिति फलांशे तु न कारकाणामन्वयः मीमांसकमतेपि तस्याव्युत्पन्नत्वा-

एवं च विशेष्यतया कारकत्वादि प्रकारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितिर्हेतुरिति कार्यकारणभावस्य क्लृप्तत्वात् यत्रापि पक्ता पाचक इत्यादौ भावना गुणभूता तत्रापि क्लृप्तकार्यकारणभावानुरोधात्तस्यामेवान्वय इत्यवसीयते इत्यादि भूषणे प्रपंचितं केचित्तु भूतले घटो देवदत्तो घटमित्यादावन्वयबोधाकांक्षानिवृत्त्योरदर्शनात्तद्व्यतिरेकेण साधुत्वलाभ इत्याहुः॥ ८॥ ९॥ ॥

दन्यथा कारकान्वितस्य कारकत्वासंभवेन यागरूपफलस्य करणतया क्रियायामनन्वयापत्तेरिति हि तत्रोक्तम् अदर्शनादिति सर्वं हि वाक्यं क्रियया परिसमाप्यत इति न्यायेन तत्रास्ति जानात्यादिक्रियामन्तरेणान्वयबोधनिराकांक्षत्वयोरदर्शनादित्यर्थः तत्र चैत्रः सुंदर इति क्रियासाकांक्षवाक्यस्यासाधुतापत्तिः फलांशान्वयलाभेनैवोपपत्तौ भावनावाचकत्वालाभश्चेत्यस्वरस आहुरित्यनेन सूच्यते॥ १५॥

कृतपूर्वीत्यत्र भावविहितक्तेन सिद्धावस्थापन्नो भाव उच्यते तद्विशेषणं च प्रकृत्यर्थक्रियेत्याशयेन मूलमवतारयति एवमित्यादिना क
र्त्रादावित्यादिना भावपरिग्रहः इत्यादीनामित्यादिना क्त्वातुमुनादीनां संबध्यत इति कारकप्रकारके बोधं प्रति विशेष्यतया धातुजन्य भाव
नोपस्थितेर्हेतुतायाः पूर्वमुक्तत्वादिति भावः कृतपूर्वी कटमिति नन्वत्र कर्मणि क्तेकटशब्दादनभिहिताधिकारीयद्वितीयानुपपत्तिः भा
वे क्तस्तु सकर्मकाद्गगनकुसुमायमान एव तयोरेवेति नियमात् अत एव नपुंसके भावे पि न सः तथा च कथमुक्तदार्ष्टा तिक वाक्योप
पत्तिरिति चेदत्राहुः कर्मणो विशेषरूपेण प्रागविवक्षयाऽकर्मकत्वाद्भावे प्रत्यये तदंतस्य पूर्वशब्देन समासे स पूर्वो च्चेतीनिः पश्चात्तु क

एवं कर्त्रादौ विहितानामित्यादीनां क्रिययैवान्वय इत्याह अविग्रहा गतादिस्था यथा ग्रामादि कर्मभिः क्रिया संबध्यते
न इत कृतपूर्व्यादिषु स्थिता न विविच्य ग्रहो ग्रहणं यस्याः सा अविग्रहा गुणीभूतेति यावत् यथा च ग्रामं गत इत्यत्र क्तप्र
त्ययार्थगुणीभूतापि क्रिया ग्रामादि कर्मभिः संबध्यते तथा कृतपूर्वी कटमित्यत्रापि गुणभूताऽऽदिभिरित्यर्थः ॥ ६८ ॥

र्मणो विशेषरूपस्य विवक्षया तत्र द्वितीयेति इदं च कर्तृकर्मणोः कृतीति भाष्ये स्पष्टं ईदृश विवक्षाविवक्षे च तद्भाष्य प्रामाण्यात् कृतपूर्वी
त्यादि विषये एव नान्य विषय इति बोध्यम् इत्यादिभिरिति तदर्थ कर्त्रादिभिरित्यर्थः वस्तुतस्तु दार्ष्टान्तिके स्ववाचक प्रकृतिक प्रत्य
यार्थेऽन्यस्मिन्वा गुणीभूतकटादि कर्म भावादिभिरिति व्याख्येयम् नातः कृतपूर्वीति प्रयोग घटक क्तस्य धात्वर्थानुवादकत्वे पि क्ष
तिः पूर्वकालिक क्रियाकर्तेति ततो बोधेन तादृश क्रियाया इत्यर्थकर्तरि गुणत्वात् नाप्ययं भावाधिकारीय स्वातंत्र्येणाप्रयोगात् अत
एव भोक्तुं गतमेतेनेत्यादि प्रयोगोपपत्तिः भावानधिकारीय भावविहित प्रत्ययस्य धात्वर्थानुवादकत्वात् प्रकृत्यर्थ क्रियाया अगुणत्वा
त् एवमव्ययकृतो भाव इत्युक्ते पाक इत्यादि प्रयोगस्थ घञर्थानुमनाद्यर्थे वेलक्षण्यानुभवात्तुमुनादीनामपि साध्यमात्र स्वभाव भावा

वृत्तिमात्रेइति मात्रपदंकृत्स्नार्थकम् वक्ष्यमाणत्वादिति समासेखलुभिन्नैवेत्यनेनेत्यादिः तत्रसमासपदस्यवृत्तिसामान्यपरत्वेन
ख्याप्यमानत्वादितिभावः कथमिति गतइत्यादौकृद्वृत्तिःसत्त्वेनगमनकर्तृरूपगतपदार्थैकदेशभावनायांकर्मान्वयासंभवा
दृष्टान्तासिद्धिरितिभाव नित्यसापेक्षस्थलेहिपक्षद्वयीचैत्रस्यगुरुकुलमित्यत्रविशेषणस्यचैत्रादेर्गुर्वादिद्वारकसंबंधेनकुलादि
रूपविशेष्यएवान्वयइतिनत्रैक पक्षः सर्वोक्तोहरिणा समुदायेनसंबंधोयेषांगुरुकुलादिना संस्पृश्यावयवास्तेतुयुज्यतेनह्यता
सहेति उक्तस्थलेसमुदायनिरूपितसंबंधएवदेवदत्तस्येतिषष्ठी तत्रैवतदन्वयः उक्तंच संबंधिशब्दःसापेक्षोनित्यसर्वःसम

नचवृत्तिमात्रेसमुदायशक्तेर्वक्ष्यमाणत्वात्तदन्तर्गतभावनापदार्थैकदेशइतिकथंतत्रान्वयइतिवाच्यम्
नित्यसापेक्षेष्वेकदेशेपिदेवदत्तस्यगुरुकुलंचैत्रस्यनप्तेत्यादाविवान्वयाभ्युपगमात् ॥ ५ ॥ ६ ॥

स्यते वाक्यवत्साव्यपेक्षाहिवृत्तावपिनहीयतेइति नित्यमपिसापेक्षपदार्थान्वयी हियतोदेवदत्तस्यगुरोःकुलमित्यादिव्यपेक्षाय
सापेक्षासासमासेपिनहीयतइतिकारिकार्थ पदार्थः पदार्थेनान्वेतीतिव्युत्पत्तिस्तुनित्यसापेक्षातिरिक्तविषयेतितद्भावः।
तत्रांतिमपक्षमभिप्रे त्यसमाधत्ते नित्यसापेक्षेष्विति ननुचगुरुत्वादेरन्यनिरूप्यत्वेनतदुपस्थितौनियमेनजायमानाया
निरूपकाकांक्षायानिवृत्तयेदेवदत्तादन्वयवत्प्रकृतेपिकिंसाधनकंगमनरूपसाध्यमितिसाधनाकांक्षानिवृत्तयेग्रामादिक
र्मान्वयस्यावश्यकत्वान्नदृष्टान्तासंगतिरितिभावः आदिनाशौरि शालितपभइत्यादे संग्रहः॥

अवतरणिकास्थादिपदग्राह्यं स्पष्टयति एवंभोक्तुमिति अत्राप्यादिपदग्राह्यं भुक्त्वा पाक इति घञर्थभावगुणभूतायांपच्यर्थक्रिया यांतुमुनंतार्थक्रियान्वय इति बोध्यमित्यर्थः अत्र नव्यास्तु तुमुन्विधायके क्रियार्थायां क्रियायामित्युक्त्या प्रत्यासत्त्या क्रिययो रेकजातीयत्वलाभेन स्ववाचकप्रकृतिकप्रत्ययार्थप्रत्ययगुणीभूतायाः साध्यमात्रस्वभावाया एव क्रियाया मित्यनेन ग्रहणाद्भोक्तुं गतं भोक्तुं पाक इत्यसाध्वेव ध्वनितं चेदमुपपदमतिङिति सूत्रभाष्ये यत्र तु क्रियामात्रार्थकस्य ग्रहणं तत्र क्रियामात्रविशेष णादपीति गतपाकादियोगेपि सुच्त्क्वादीत्याहुः तेषामयमाशयः घञाद्यंतस्थले प्रकृतिप्रत्ययाभ्यां विशेष्यविशेषणभावाप न्नसत्त्वासत्त्वस्वभावक्रियाद्वयमुपस्थाप्यते तत्र प्रत्ययार्थक्रियायाः प्राधान्यं एवं च धातूपस्थाप्यक्रियायाः साध्यमात्रस्वभा

एवंभोक्तुं पाकः भुक्त्वा पाक इत्यत्रापि द्रष्टव्यम्

वत्वेपि तस्या घञर्थप्रतिगुणत्वान्न तत्र तुमुनादीति तत्रेदं चिंत्यम् भावानधिकारीयधात्वर्थानुवादकप्रत्ययांतयोगे तुमुनो दुर्वा रत्वात् किंच सुज्विधायके प्युक्तविशेषणविशिष्टायास्तस्या ग्रहणमावश्यकं तत्तद्विशेषणीभूतक्रियायाः साध्यमात्रस्वभावत्वे न तज्जन्मगणने द्वौ पाकावित्यत्र सुजापत्तेरशक्यवारणत्वात् न च तत्रेष्टापत्तिः क्रियापदोपादानवैयर्थ्याद्भ्यादृत्तिपदसामर्थ्ये नैव क्रियायालाभादिति वक्ष्यमाणत्वात् किंच साध्यत्वेन क्रियात त्रेति हरिपद्यव्याख्यावसरे एकस्यैव संबंधिभेदादाचार्यत्वमातुल त्वादिवदेकस्या एव क्रियायाः प्रकृतिप्रत्ययरूपवाचकसंबंधिभेदादुपस्थितिरिति स्वोक्तिविरोधः क्रियाद्वयबोधांगीकार इति॥

सिद्धान्त इति वैयाकरणसिद्धान्त इंद्रियाणां स्वविषये ष्विन्यादिनाप्रतिपादितावोधकतारूपाशक्तिराख्यातेप्यबाधितैवनतो भावनाबोधस्य
जायमानत्वादित्यर्थः साधुत्वपरेति तथा चहरिः साधुत्वज्ञानविषयासेषाव्याकरणस्मृतिरिति तत्र साधुशब्दे अवच्छेदकतयाबोधज
नकतावच्छेदकतयेत्यर्थः अतिरिक्तशक्तिवादे साधुत्वं न शक्तिवादे साधुत्वं न शक्तत्वमसाधोरपिबोधात्किंतुबोधकत्वमितिवक्ष्य
माणसिद्धांतिमतेपीत्यर्थः असाधुतास्यादेवेति आख्याताच्छक्तिभ्रमेणभावनाबोधेपितत्रतस्यासाधुतास्यादेवेत्यर्थः तथाच भा॰

ननु सिद्धांते बोधकतारूपाशक्तिराख्यातशक्तिग्रहवतांबोधादावश्यकीतिधातोरेवभावनावाच्यानाख्यातस्येतिकथं
निर्णय इत्याशंकांसमाधत्ते भेद्यभेदकसंबंधोपाधिभेदनिबंधनम् साधुत्वं तदभावेपिबोधोनेह निवार्यते भेद्यं विशेष्यं
भेदकं विशेषणं तयोर्यः संबंधस्तस्योयो भेदस्तन्निबंधनं साधुत्वम् अयमर्थः व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्रैवाव
च्छेदकतयाकल्प्यधर्मस्यशक्तत्वंवदतांमीमांसकानांपुनः शक्तत्वंसाधुत्वमित्येकमेवेतितद्रीत्याविचारेसाधुत्वनिर्ण
य एव शक्तिनिर्णय उच्यते अतिरिक्तशक्तिवादेप्याख्यातानामसाधुताभावनायांस्यादेवं च चतुर्थ्यर्थे तृतीयाप्रयोगव
त् धात्वर्थभावनायामाख्यातप्रयोगे यान्नेकर्मण्यसाधुशब्दप्रयोगवन्नानृतंवदेदितिनिषेधोल्लंघनप्रयुक्तंप्रायश्चित्तंद
र्शनांतरीयव्युत्पत्तिमतांस्यादेवेति॥ २२ ॥ व्यक्तनासिद्धेशब्दार्थसंबंध इत्यत्र समानायामर्थावगतौसाधुभिर्भाषितव्यंनासाधुभिरितिग
म्यागम्येतिवन्नियमः क्रियत इति पस्पशायामुक्तम् एवं यादृशविशेषणान्वितयादृशविशेष्यबोधे यादृशानुपूर्व्याः ॥॥ सूत्रकृदाद्य
न्यतमसंमतत्वं तादृशबोधे तादृशानुपूर्वीकः शब्दः साधुर्नान्यत्र अतएवास्वशब्दोश्वेनसाधुः किंतु निःस्वे अ ॥॥ श्वशब्दो निःस्वे न सा
धुः किंतु तुरग इति संगच्छते नन्वस्तु साधुतेत्यत आह एवं चेति यान्नेकर्मणीत्यनेन नानृतं वदेन्नापभ्रंसितं वा इत्यादिश्रुतिः कृतुमक॰

मीमांसकः शंकते नन्विति त्वन्मते वैयाकरणमते नानृतमितिदर्शपूर्णमासप्रकरणे हि नानृतं वदेदिति श्रूयते तत्र किमयंप्रतिषेध पुरुषार्थ आहोस्वित्क्रत्वर्थ इति संशये वदेदित्याख्यातात्कर्तृप्रतीत्या कर्तृवाचकत्वनिर्णयो लः कर्मणीत्यनुशासनात्तस्य कर्तृपरत्वलाभाच्च प्रत्ययार्थत्वेन वदनं प्रति प्राधान्यादिदं नं तावत्पुरुषार्थीनः प्रतिषेधोपि पुरुषार्थः निषेधप्रतियोगित्वेन वदनक्रियामनुवदता वदेति शब्देन पुरुषार्थतयैव बोधनात् अदृष्टस्यैवानृतवदनस्यानिष्टसाधनतया विपरीतस्वभावबोधकनञा बोधनादन्यदृशानृतवदनस्यात्रानुपस्थितत्वात् अतएवानारभ्याधीनस्यानृतवदननिषेधस्याप्येतदेव मूलं भवतीति लाघवं अन्यथा तन्मूलभू

नतु त्वन्मते नानृतमिति निषेधः क्रत्वर्थ एव न सिध्येत् आख्यातेन कर्तुरुक्तत्वात् श्रुत्या पुरुषार्थत्वैवस्यात् प्रकरणाद्धि क्रत्वर्थता तच्च श्रुतिविरोधेन बाध्यत इति चेन्न॥ ॥नः पुरुषार्थीन्यो निषेधः कल्प्य इति गौरवं प्रसज्येतेति पूर्वपक्षेऽनन्यलभ्य एव शब्दार्थ इति न्यायपादावनेवाख्यातवाच्या कर्त्तृत्वाख्यातवाच्य भावनायाम् अविनाभावादाक्षेपलभ्य एवेति न तत्र न स्मशक्तिः ल कर्मणीत्यादिस्मृतिरपि द्वैकयोरित्यनेनैकवाक्यतया तत्संख्यातवाचित्वपरा पचतिदेवदत्त इत्यादौ चैत्रगोः शुक्ल इतिवत्सामानाधिकरण्यलक्षणयैवेति नाख्यातस्य कर्तृवाचित्वमिति कर्तुः श्रुतेरनुपस्थितत्वान्न पुरुषार्थता तस्य किं तु प्रकरणात्क्रत्वर्थतैवेति निर्णीतकर्माधिकरणेन त्स्थित पूर्वपक्षमनुवदति आख्यातेनेति तिङेत्यर्थः तद्वेति प्रकरणं चेत्यर्थः श्रुतिविरोध इति निरपेक्षस्वरूपश्रुतिप्रातिकूल्य इत्यर्थः तथाहि श्रुत्याश्रयः षडिह विनियोजकाः तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयस्ये

र्लभ्यादेकेनापरस्यबाधोवक्तव्यः स चबलवतादुर्बलस्येतिकस्यदौर्बल्यमित्याकांक्षायांपरदौर्बल्यप्रतिपादकं श्रुतिलिंगवाक्यप्र
करणस्थानसमाख्यानांसमवायेपारदौर्बल्यमर्थविप्रकर्षादितिसूत्रंप्रणिनायमहर्षिर्जैमिनिः श्रुत्यादीनांपठितानांसमवायेएक
त्रोपनिपातेपारदौर्बल्यमितिपरएवपारः उत्तरपठितं तथाचैषांमध्येयदपेक्षयापरत्वं तद्दुर्बलमित्यर्थः तत्रहेतुमाह अर्थवि
प्रकर्षादिति अर्थस्यविनियोजकस्यलिंगादितोविप्रकर्षादुत्तरत्वर्निलत्वात् लिंगादेर्विलंबेनपूर्वापेक्षयाविनियोजकत्वावगतेरि
तियावत् तत्रश्रुत्यादीनामुदाहरणानिनिरपेक्षारवस्तुः इतरप्रामाण्यानधीनप्रामाण्यकत्वंचनिरपेक्षत्वम् यथाव्रीहीनवहंती
ति अत्रक्रियाजन्यफलभागित्वंकर्मत्वंबोधयंतीद्वितीयाश्रुतिरितरनिरपेक्षैवव्रीहीणामवघातशेषित्वंप्रतिपादयति १॥ अर्थ
विशेषप्रकाशनसामर्थ्यंलिंगं यथाबर्हिर्देवसदनंदामीति अत्रलवनार्थप्रकाशकतयालवनस्यविनियोगः २ परस्पराकांक्षाव
शादेकस्मिन्नर्थेपर्यवसन्नानिपदानिवाक्यम् यथादेवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् अग्नयेत्वाजुष्टं
निर्वपामीति अत्रमंत्रलिंगेननिर्वापेप्रयुज्यमानस्यसमवेतार्थभागस्यैकवाक्यताबलेनदेवस्यत्वेत्यादिभागस्यापितत्रैवव
िनियोगः ३ लब्धवाक्यभावानांपदानांकार्यांतरापेक्षावशाद्वाक्यांतरेणसंबंधस्त्राकांक्षापर्यवसन्नम् प्रकरणं यथास
मिधोयजतीति अस्यहिदर्शपूर्णमासेकथम्भावाकांक्षायाःप्रकरणपाठवशाच्छेषत्वम् ४ स्थानंक्रमः सचानेकस्याम्नान
स्यसन्निधिविशेषाम्नानम् यथादधिरसीत्यत्राग्नेयोपांश्वग्नीषोमीययागाःक्रमेणपठिताः एवंमंत्रभागेपिक्रमेणानुमंत्रण
त्रयंपठितं तत्राग्नेयाग्नीषोमयोर्द्वयोर्लिंगेनैवविनियोगसिद्धिः दधिरसीत्यत्रतुनलिंगादिविनियोजकम् किंतुयस्मिन्प्रदे
शेब्राह्मणउपांशुयागविधानंतस्मिन्प्रदेशेमंत्रेप्यस्यपाठइतिक्रमादुपांशुयागानुमंत्रणेतस्यविनियोगः समाख्यायोगबलं

यथाहोत्रमौद्गात्रमित्यादि तत्र हि होतुरिदं होत्रमित्यादियोगवलेन होत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानीति विरोधोदाहरण
ऽन्यथा श्रुतिलिंगयोर्विरोधे श्रुतिर्बलीयसी लिंगं तु दुर्बलं अर्थविप्रकर्षात् यथा कदाचन स्तरीरसीत्यादिकायामृचो विनियोजिका श्रुति
रैन्द्र्या गार्हपत्यमुपतिष्ठत इति इन्द्रप्रकाशनसामर्थ्याल्लिंगादिन्द्रोपस्थापने विनियोगोऽस्याः प्रतिभाति अन्यप्रकाशकस्यान्यत्र विनि
योगायोगात् श्रुत्या गार्हपत्योपस्थापने समर्प्यते गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया काममपि क्रियामपेक्ष्य प्रकृत्यर्थस्य
शेषित्वं बोधयति क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात् एवमैन्द्र्येति तृतीया प्रकृत्यर्थस्य शेषत्वं क्रियाप्रति साधकतमत्वरूपक
प्रकाशनस्य तदर्थत्वात् ततोऽनयोर्विरोधः तत्राद्ये पूर्वपक्षः सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका न ह्यसमर्थं श्रुतिसहस्रमपि विनि
योक्तुमलम् अतो लिंगस्य बलवत्त्वादिन्द्रोपस्थापनेऽस्या विनियोगः तदनुरोधिन्या द्वितीया सप्तम्यर्थतया व्याख्येया गार्हपत्यसमीप
इन्द्रोऽनयोपस्थातव्य इत्यर्थः पर्यवस्यतीति सिद्धान्तस्तु श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु तज्ज्ञानमपि येन लिंगबलवद्भवेत् तस्य
च पूर्वसत एव विनियोगान्यथानुपपत्त्या ज्ञानं पश्चादुपजायते लिंगं तु विनियोजने श्रुतिमपेक्षते न तु [illegible]न यैन्द्र उपस्थातव्य इति लिंगा
त्स्वरसतः प्रतीयते किन्त्विन्द्र एतादृगित्येतावन्मात्रं तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थयाऽनया ऋचोऽन्यथानुपपत्त्या लिं
गेनाऽनयेन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया यया विनियोगो भवेत्ततो यावल्लिंगं श्रुतिकल्पनायै प्रक्रान्तव्यापारं तावत्तत्र दृष्टश्रु
त्या विनियोगः सिद्ध इति प्रकरणेन निराकाङ्क्षेकयानुपपत्त्या श्रुतिः कल्पनीया तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्यं नीयमान
इन्द्रपदं परमैश्वर्यपर्यायवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यत इति विरोधोदाहरणं तराणि त्वन्यतोऽवधार्याणि गौरवभया
न्नेह प्रपञ्चितानि तदयं निर्गलितोऽर्थः श्रुतिर्निरपेक्षत्वात्सर्वतो बलवती लिंगं तु विनियोगे एकान्तरितत्वादूर्ध्वान्तरितवाक्यादिबलवत्

तकारसामान्यार्थे निरूपिते तद्विशेषे कजिज्ञासा निवृत्तावश्यं वक्तव्यत्वात् तद्विशेषार्थनिरूपणेऽवसरस्य संगतित्वं सूचयन्नाह प्रत्येकमिति दशलकाराणामिति लट् लिट् इत्यादिक्रमेण पठितानामित्यर्थः आदेशानां वाचकत्वमिति पक्षेपि तिङाद्यादेशनिष्ठां बोधकतारूपां शक्तिं लडादिष्वारोप्य तद्विधानात्तदर्थकत्वं तेषामक्षतमिति भावः प्रारब्धापरिसमाप्तत्वमिति विनष्टाद्यवयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वमित्यर्थः भाविभूतक्रिययोरतिप्रसंगवारणाय क्रमेण पदद्वयम् लक्ष्ये लक्षणं ग्राहयति पचतीति अधिश्रयणादीति साध्यत्वप्रकारकप्रतीतिविषयपूर्वापरीभूतावयवसमुदायस्यैव क्रियात्वादिति भावः तदिति उक्तवर्त्तमानत्वमित्यर्थः यद्यपि भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्येति निरुक्तभाष्यात् क्रियातिरिक्तकालस्यैव वर्त्तमानत्वादिकं प्रतीयते तथापि निरुपाधिकस्य तस्य वर्त्तमान

प्रत्येकं दश लकाराणामर्थं निरूपयति वर्त्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः लडादयः स्थिताः षट् क्रमेणैष्वर्थेषु द्रष्टव्याः तथाहि वर्त्तमाने लडिति सूत्रात् प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम् पचतीत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट्प्रयोगः ॥ ९ ॥

वादिना प्रत्येतुमशक्यत्वादुपाधिभूतक्रियामादायैव तत्र तत्त्वस्य वक्तव्यतयावश्यकत्वात् क्रियायामेव तत्त्वमुक्तमित्यवधेयम् वस्तुतस्तु दंडमुहूर्त्ताद्यात्मकः खंडकाल एव वर्त्तमानत्वादिना लडादिवाच्यः तद्गतं वर्त्तमानत्वं च तत्तच्छब्दप्रयोगाधिकरणत्वमेव तदादिन्यायेन शब्दप्रयोगाधिकरणत्वेनानुगमाच्च न शक्यानंत्यं यद्येवमपि तत्तत्कालत्वेन तत्तत्कालबोधस्यानुपपत्तिरिति विभाव्यते तदा तु शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वावच्छिन्न एव लटः शक्तिः क्रियारंभात्पूर्वं समाप्तेनंतरं चाधीते पचतीत्यादिप्रयोगापत्तिस्तु स्ववृत्तिप्रागभावाप्रतियोगिवृत्तित्वस्ववृत्तिध्वंसाप्रतियोगिप्रकृतक्रियानुयोगिकत्वाभ्यां विशेषितेनाधेयतासंबंधेनान्वयनियमोपगमेन वारणीया यत्र तु खंडक्रियैव धात्वर्थस्तत्र शुद्धाधेयतासंबंधेनैव तदन्वयान्नात्मास्तीत्यादौ दोषः इति भूतभ

पक्षद्वयस्यैवाकारूढं तां प्रदर्शयन्प्रथमं द्योतकत्वपक्षे उपपत्तिमाह नचेति क्रियासामान्येति कालसामान्यरूपक्रियावाचकस्येत्यर्थः तद्विशिष्टे वर्तमानकालादिविशिष्टे वर्तमानत्वादिविशिष्टे वा व्यापारे इत्यर्थः लडादेरित्यादिना लिडादिपरिग्रहः उपयोगादिति स च प्राक् प्रतिपादितः तथा च लडाद्यादेशत्वे तिवादीनां वर्तमानत्वादिद्योतकत्वात् पाक्षीदित्यादौ वर्तमानक्रियाप्रतीतिः क्रियासामान्यशक्तधातोस्तत्तद्विशिष्टे लक्षणया वनत्तद्विशिष्टक्रियाबोधोपपत्तौ पृथग्वर्तमानत्वादौ तेषां शक्तिकल्पने गौरवादिति भावः वाचकत्वपक्षमवलंब्याह अन्वयव्यतिरेकाभ्यामित्यादि नच तत्र कौण्डिन्यन्यायात्कर्त्राद्यर्थबाधः शक्ततावच्छेदकभेदात् किंचैवं लः कर्मणीति सूत्रे निरवकाशं स्यात् स्थलांतरे।

नच वर्तमानत्वादि लडादिभिर्द्योत्यते क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादेस्तात्पर्यग्राहकत्वेनोपयोगात् अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव अन्यथा प्रत्ययानां वाचकत्वविलोपापत्तिरित्यपि पक्षांतरं लिडर्थमाह परोक्षइति परोक्षे लिडिति सूत्रात् कालस्तावद्द्यतनानद्यतनभेदेन द्विविधः द्विविधोपि भूतभविष्यद्रूपः तत्रानद्यतने भूते परोक्षे लिडित्यर्थः तेनाद्यतने भूतेऽनद्यतने भविष्यति भूतेप्यपरोक्षे च न लिट्प्रयोगः॥ ११

भावः अन्यथाऽन्वयव्यतिरेकयोः शक्त्यग्राहकत्वे विलोपापत्तिरिति सर्वत्र प्रकृत्यैव तत्तत्प्रत्ययार्थत्वाभिमतबोधसंभवादिति भावः अधिकं सुबर्थनिर्णये वक्ष्यते अनद्यतने भूत इति भूत इति अनद्यतने लङिति सूत्राभ्यां तत्तत्पदानुवृत्तिरिति भावः न लिट्प्रयोग इति उक्तार्थस्य बाधात् पपाचेत्यादिजबोधानंतरमनद्यतनत्वादिसंदेहानुदयाद्युतत्वादिवत्तयोरपि तद्वाक्यजबोधे क्रियांशे विशेषणतया भानमभ्युपेयम् नच वाचकतां द्योतकतां वा विनानुपपन्नमिति लिटस्तदभ्युपगमस्यावश्यकइति भावः॥ ॥

पिविध्याद्यर्थे बाधसंभवादिति

ननु परोक्षत्वं प्रत्यक्षान्यज्ञानविषयत्वं तथा च प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्त्वात् पपाचेत्यादिप्रयोगापत्तिरत आह परोक्षत्वं चेति यथाश्रुतप्रत्यक्षाविषयत्वस्योपनीतक्रियायामभावेन तत्र पपाचेत्यादिप्रयोगानुपपत्तिरत आह साक्षात्करोमीति साक्षात्करोमी-त्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वमित्यर्थः उक्तस्थले प्रत्यक्षविषयतासत्त्वेपि तादृशविलक्षणविषयत्वाभाववत्त्वमक्षुण्णमिति न तदनुपपत्तिः प्रत्यक्षतादृशशब्दप्रयोक्तुर्मोहाद् दशमस्त्वमसीत्यादौ शाब्दज्ञानसहकृतमनसैव दशमसाक्षात्कारेऽननु-शब्दात् लौकिकविषयतानियामकेन्द्रियसंयोगादेरभावे शाब्दे तदुत्वासम्भवात् अत एव तत्त्वमसीत्याद्याचार्योपदेशश्रमदमादि

परोक्षत्वं च साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वं न च क्रियानामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमिति भाष्यात्तस्या अतीन्द्रियत्वेन परोक्षत्वव्यावर्तकमिति शंक्यम् पिण्डीभूताया निदर्शयितुमशक्यत्वेप्यवयवशः साक्षात्करोमीति प्रमितिविषयत्वसम्भवात् अन्यथा पश्य मृगो धावतीत्यत्र तस्यादर्शनकर्मतानस्यादिति प्रतिभाति॥ ऽसंस्कृतमनस आत्मदर्शने कारणमिति गीताभाष्ये उक्तमिति सर्वं समंजसं क्रियानामेयमिति भाष्ये सा सा वनुमानगम्येति शेषः क्रियासाध्यत्वेन प्रतीयमानाद्दूयपचतीत्यादिव्यवहारविषयीभूताऽयतः पूर्वापरीभूतात्मिकानेकव्यापारसमूहात्मिका अतोत्यन्तापरदृष्टा परेण प्रत्यक्षप्रमाणेनात्यन्तमदृष्टा तज्जन्यज्ञानाविषयाद्दृतियावत् पिण्डी-भूतेति अवयवानां मानुविनाशित्वेन पिण्डस्याभावादिति भावः मनुतर्हि तस्याः किं प्रमाणमत आह सा सेति विक्लित्त्यादिरूपकार्यानुमेयेति अन्यथेति क्रियायाः अवयवशोपि साक्षात्कारानभ्युपगमे इत्यर्थः प्रतिभातीति उक्तार्थे एवोस्मदुक्ति विषयो भवतीत्यर्थः॥

ननुक्रियावयवाअपिक्रियावदतींद्रियाएव यथापचेरुदकसेचनादयोवयवास्तथातेषामप्यवयवास्तेपिसमूहरूपेणैवधातु
वाच्याः यस्तुक्षणावच्छिन्नस्तद्रूपोवयवःसतुनधातुवाच्यः किंत्ववयवसमूहात्मनैव आश्रितक्रमरूपत्वात्तद्वाच्यस्य एवं
चसदसद्रूपाक्रियानसद्विषयेंद्रियग्राह्याः तदुक्तं क्रमात्सदसतांतेषां मात्मनानसमूहिनः सद्वस्तुविषयैर्यांतिसंबंधंचक्षु
रादिभिरिति अत्यंतापरदृष्टेतिभाष्यस्याप्यवयवरूपेणसमूहात्माचादृष्टेत्येवार्थः अतएववर्तमानेलडितिसूत्रेभाष्येऽस्तिवर्त

व्यापाराविष्टानांक्रियानुकूलसाधनानामेवात्रपारोक्ष्यंविवक्षितमतोनोक्तदोषः
अयंपपाचेत्याद्यनुरोधाद्व्यापाराविष्टानामितीत्यपिवदंति कथंतर्हिव्यानेनेकि
रणावलीमुदयनइति स्वक्रियायाःस्वप्रत्यक्षत्वादितिचेत् असंगतमेव ॥ ९ ॥

मानकालः परंत्वादित्यगतिवन्नोपलभ्यतइत्युक्तं तस्यप्रत्यक्षेणेतिशेषः एवंचवर्तमानत्वाक्रांतक्रियाणांस्पष्टमेवाप्रत्यक्षत्वं
नतुउपलभ्यतेपश्यमृगोधावतीत्यादौतुदृशिर्ज्ञानार्थकोधावतिर्वाफलपरइतिनकश्चिद्दोषः किंच अवयवस्यप्रत्यक्षत्वेप्रकृ
तः कटमित्यादाववयवातीतत्वेनसमुदायातीतत्वमादायक्तायुपपादनवदवयवप्रत्यक्षत्वेनसमुदायप्रत्यक्षत्वमादायपरो
क्षत्वस्यचारितार्थ्ये भाष्यस्यपूर्वपक्षस्यनिर्दलत्वापत्तिरित्यपरितोषान्मतांतरमाह व्यापाराविष्टानामिति एवंचातीत

त्व्यापारविशिष्टपरोक्षकर्तृकक्रियात्वं चाद्यतनो लिट् इति परोक्षे लिट् इति सूत्रार्थः अयं पपाचेति तदानीं कर्तुः पारोक्ष्येपि व्यापारदशायां पा
रोक्ष्यासत्त्वादुक्तप्रयोगोपपत्तिरिति भावः इत्यपि वदतीति मतांतरेणाहरेत्रापिः पूर्वोक्तार्थस्यापाततरमणीयत्वमन्वानाभाष्यानुसारिण इति
शेष अत्राहुर्नैयायिकाः पूर्वापरीभूतावयवसमुदायात्मकपारिभाषिकक्रियायाश्चाप्रत्यक्षत्वं युक्तमेव समूहस्यैवाभावात् तदवयवा
नामपि पारोक्ष्यं तु सर्वानुभवविरुद्धम् तत्र प्रत्यक्षकारणचक्षुःसंयुक्तसमवायादेः सत्त्वादन्यथा घटपुस्तकादेरप्यप्रत्यक्षत्वापत्ति
रिति तद्व्याकोपः अधिश्रयणं साक्षात्करोमीति सार्वजनीनप्रतीतेश्च प्रतीतेः पदार्थासम्बन्धकत्वे व्यवहारमात्रोच्छेदापत्तिश्च सदसता
तेषामित्यस्य विद्यमानाविद्यमानावयवरूपाणामित्यर्थात्समूहात्मकक्रियाया. पारोक्ष्यप्रतिपादनपरत्वान्नहरिवाक्यविरोधोपि
अन्यथा क्रियासदसद्रूपेति वदतो व्याघातः स्पष्ट एव कालस्य प्रत्यक्षत्वाभावेन तदनुवादकभाष्योपष्टंभन्यासोपि नावयवानां पारो
क्ष्योपपादकः प्रकृतं कूटमित्यत्राप्यवयवातीतत्वमादायैव प्रयोगोपपत्तौ समुदायातीतत्वारोपे मानाभावेन तद्दृष्टान्तासंगतिश्च दा
र्ष्टान्तिकेवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमारोप्य पूर्वपक्षस्य निर्दलत्वापादनमपि स्वाग्रहमूलकमेवात एव भाष्ये पश्य मृगो धाव
तीत्यनेन लौकिकविषयताशाल्यर्थकदर्शिकर्मत्वं धावतेः प्रतिपादितं कथमन्यथाऽऽगारांतरस्थितस्य न तादृशप्रयोगः मृगकर्तृक
धावने ज्ञानविषयत्वरूपज्ञानकर्मत्वाबाधात् धावने संयोगरूपफलार्थकत्वे व्यापारवाचकत्वाभावाद्धातुप्रसंगश्च स्वजनकव्या
पारगतपौर्वापर्यारोपेण क्रियात्वोपपादने चाप्रत्यक्षत्वापत्तिस्तदवस्थैवेति न किंचिदेतत् तस्मात्पूर्वोक्तमतमेव निराबाधमिति

ख्यासंगादिनेति यथा मनोहं किल विललापेत्यत्र मदादिना मनोः सन्निधानात्क्रियापारोक्ष्यं तद्वदित्यर्थः लिडसंभवादिति अत्रेदं चिंत्यम् नवास्तवं पारोक्ष्यादि लिडादि नियामकम् अध्यास्त सर्वर्त्तुसुखामयोध्यामित्यत्र लङो साधुतापत्तेः किंतु वैवक्षिकं तत्तथा वक्ष्यति च स्वयमेव सारकृत् अनद्यतनभूतत्वेन विवक्षिते लङ् तत्रैव पारोक्ष्य विवक्षायां लिडिति प्रकृते चानायासनिष्पन्नत्वशीघ्रनिष्पन्नत्वप्रतीतिफलकभूतानद्यतनत्वविवक्षाया एवं सूक्ष्मकालेन करिष्यामि यत्र काले मयापि साक्षात्कर्त्तुमशक्यमिति प्रतीतिफलकपारोक्ष्य

ख्यासंगादिना स्वव्यापारस्य परोक्षत्वोपपादने पि वहुतर मनः प्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रंथेऽनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन लिटो योगात् लुडर्थमाह श्वोभाविनीति अनद्यतने भाविनीत्यर्थः अनद्यतने लुडिति सूत्रात् यथा श्वोभवितेत्यादौ लृडर्थमाह भविष्यतीति भविष्यत्सामान्य इत्यर्थः लृट् शेषे चेति सूत्रात् यथा घटो भविष्यतीत्यादौ तत्त्वं वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम् लेटोर्थमाह विध्यादाविति लिङर्थे लेडिति सूत्रात् लिङर्थश्च विध्यादिरिति वक्ष्यते लोडर्थमाह प्रार्थनइति आदिना विध्याद्याशिषो गृह्यंते आशिषि लिङ्लोटौ लोट् चेति सूत्राभ्यां तथावगमात् यथा भवतु ते प्रसाद इत्यादौ एतयोरर्थो लिङर्थ एव त्रयाणां समानार्थत्वादिति तन्निर्णये नै

विवक्षायाश्च सत्त्वाल्लिडुपपत्तिसंभवादिति अनद्यतन इति अतीताव्यवहितरात्रिपश्चार्द्ध विशिष्टागामिरात्रिपूर्वार्द्धोपेतं दिनमद्यतनं तद्भिन्नकालत्वमनद्यतनत्वमिति रक्षिताकारादयः कैयटस्तु लुङ्सूत्रे तीतरात्रेरंत्ययामेनागामिरात्रेराद्ययामेन सहितो दिवसोद्यतन इत्यूचे अत्रेदमवधेयम् अनद्यतनभूते यदा भूतत्वमात्रविवक्षा तदा लुङेवतेन ह्यो पाक्षीदित्यादौ भूतत्वमात्रविवक्षायां लुङि

पश्चात्तु पदेन सवधेन यतनत्वप्रतीतिरिति नलुङोः साधुता एवमनद्यतनभविष्यतिभविष्यत्त्वमात्रविवक्षयाप्लृट्श्रोपक्ष्यमाणे देवतावर्
सनीत्यत्र पश्चाद्यनद्यतनत्वप्रतीतिरिति परेतु सागयागस्य द्व्यहात्मककालसाध्यत्वात्तदधिकरणद्व्यहात्मककालस्यानद्यतनत्वाभावे
नलुटोनवसराद्व्यद्दुपपत्तिः अद्यप्रभृतिमेदाशत्रश्च वर्षे भविष्यतीतिवदित्याहुः नत्वहमेकः प्रथममासवर्त्तीमिभविष्यामिचेर्
त्यत्र धात्वर्थसत्तायावर्त्तमानप्रागभावप्रतियोगित्वस्य भविष्यत्त्वस्यबाधात्तदर्थकाद्भविष्यदर्थकप्रत्ययाप्रसक्तिरत आह तत्त्व
चेति वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकसमयवत्त्वमितिपाठः तथा च तदर्थस्यापाराधिकरणस्य कालस्यानित्यराजक्रियाद्यात्मका
स्योक्तभविष्यत्त्वात्तदादायैवलृडुपपत्तिरिति पयास्रुतार्थानुसारिणः अन्येतु ननु येषां मते नश्यत्यादिधातूनां नाशमात्रमर्थस्तेषां भ
विष्यत्वस्य वर्त्तमानप्रागभावप्रतियोगित्वसत्वे श्वोभाविनाशके परश्वो नंक्ष्यतीति प्रयोगापत्तिः वर्त्तमाननाशप्रागभावप्रतियोगिनित
न्नाशे परश्वस्तनकालवृत्तित्वसत्त्वात् नचपरश्वस्तनकालस्य भविष्यत्त्वघटकप्रागभावेन्वयाभ्युपगमात्तस्य च तत्प्रागभावेबाधात्तो
क्तप्रयोगापत्तिरिति वाच्यं तथासति श्वोभाविनाशकेपि श्वो नंक्ष्यतीति प्रयोगानुपपत्तिः तन्नाशप्रागभावे श्वस्तनकालसंबंधबाधा
द तत्राह तत्त्वञ्चेति अत्र समयपदोपादानं कालेलडाद्यर्थद्वृत्यभिप्रेत्य न तु तस्य लक्षणे निवेशः प्रयोजनाभावात् ह्रियमानप्रागभाव
प्रतियोग्युत्पत्तिकत्वस्यैव सम्यक्त्वात् यमतूत्पत्तिरेव धात्वर्थस्तत्र तद्घटितमेव तन्निर्वक्तव्य अन्यथोत्पत्तेर्द्वैधाभानप्रसंगात्
एवं चोक्तस्थले भविष्यत्त्वघटकोत्पत्तौ परश्वस्तनकालवृत्तित्वबाधान्नोक्तप्रयोगापत्तिरितीत्यमवतारयंति अत्रेदमवधेयम्
द्व्यहाद्य घटो भविष्यतीत्यादौ देशकालविशेषादेरधिकरणत्वेन धात्वर्थोत्पत्तावेवान्वयः न तु भविष्यत्त्वघटकप्रागभावे उत्पत्तिम
त्त्वा तथासति कपालनाशजन्यघटनाशस्थले द्व्यहकपाले घटध्वंसो भवीष्यतीति प्रयोगापत्तेर्घटरूप प्रतियोग्यात्मकघटध्वंसप्रा

गभावस्यकपालेसत्वादेवंश्वोभाविन्यद्यभविष्यतीति प्रयोगप्रसंगश्च अद्यतनकालवृत्तित्वस्यप्रागभावेसत्वात्तथाभवनेश्वःसमुत्प द्यप्रांगणेपरश्वोगमिष्यति मैत्रेप्रांगणेपरश्वोभविष्यतीतिप्रयोगापत्तिरुत्पत्तिमतोमैत्रस्यप्रांगणवृत्तित्वात्परश्वस्तनकालवृत्तित्वाच्चय थात्वेतुतस्यपरश्वस्तनकालवृत्तित्वेपुत्पत्तेस्तत्कालवृत्तित्वान्नकश्चनदोषः एवंचवर्त्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलोघटाश्रयको व्यापारइतिबोधस्तथाचोत्पत्यघटितेभविष्यत्त्वेलृडादेः शक्तिर्लाघवात्तदघटितेनुलक्षणेतिन नंक्ष्यतीत्याद्युक्तस्यलउत्पत्तिबोधानु पपत्तिरिति विध्याशिषावितिआशीस्तुहितविषयकलोडाद्यंतशब्दप्रयोक्तृिच्छा भवतु ते इति हितविषयकमदिच्छाविषयत्वत्संबंधि शिवप्रसादकर्तृकंभवनमितिबोधः एतयोरिति लेट्लोटो रित्यर्थः त्रयाणांलेट्लोट्लिङामित्यर्थः नन्विर्णयेनैवेति लिङर्थनिर्ण

लङादिक्रमेणङितामर्थमाह ह्योभूतेप्रेरणादौचभूतमात्रेलङादयः सत्यांक्रियातिपत्तौचभूतेभाविनिलृङ्स्मृतः लङर्थमाह ह्योभूतइति अनद्यतनेभूतइत्यर्थः अनद्यतनेलङितिसूत्रात् यथास्यपुत्रोभवदित्यादि लिङर्थमाह प्रे रणादाविति विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थनेषुलिङितिहिसूत्रंतत्रविधिःप्रेरणंभृत्यादेर्निकृष्टस्यप्रवर्त्तनं

येनइत्यर्थः ॥८५॥ ॥ह्यः परस्याव्यवहितातीतदिवसेरूढतयातदात्मककालस्यलङर्थत्वेनैकदिनांतरितभूतेलङनुपपत्तिरतआह अनद्यतनइति तथाचह्यः पदंलक्षणयानद्यतनत्वेनाद्यतनमात्रबोधकमितिनोक्तदोषावकाशः एवंश्वोभाविनीत्यत्रापिबोध्यम् अ स्यपुत्रइति वर्त्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिरेतत्संबंधिपुत्रकर्तृकोत्पत्त्यनुकूलोव्यापारइतिबोधः अध्यास्तेत्यादौतुभूता नद्यतनत्वमात्रविवक्षयालङुपपत्तिः सूत्रादिध्यादीनांलिङर्थत्वप्रतीतेः कथंप्रेरणादेर्विध्यर्थत्वमतआह तत्रेतितेषुमध्येइत्यर्थःवि धिःप्रेरणमिति प्रेरणापर्यायोविधिशब्दइत्यर्थः प्रेरणायाः लिङादिशब्दस्वरूपतांवदतांमतंनिराकर्तुंप्रेरणायाःस्वरूपंदर्शयतिभृ

नावेदमधीयीयातनर्कमिति स्वोद्देश्यकत्वसंबंधेन संबोध्यविशिष्टामन्निष्ठा चवेदाध्ययनतर्काध्ययनान्यतरभावने इष्टसाधनत्वप्र-
कारकनिर्णयेच्छाविषयइतिबोधः एवमग्रेपि विधिः प्रेरणमिति प्रेरणं प्रवर्त्तनमित्यर्थः अप्रवृत्तप्रयोज्यस्याज्ञातस्वाभिलषितो-
पायइष्टसाधनताबोधनमितियावत् अपकृष्टोद्देश्यकतार इष्टसाधनत्वबोधविषयाप्रयुक्तम् लिङादिघटितंवाक्यमेवाज्ञोप-
देशपदाभ्यांव्यपदिश्यते तदेवाह भृत्यादेरिति आदिनाशिष्यादिपरिग्रहः तत्रलौकिकमुदाहरणम् भवान्कुलमानयेदित्यादि
वैदिके स्वर्गकामोयजेतेत्यादि नियोगकरणमिति निमंत्र्यते नियुज्यतेऽनेनेतिव्युत्पत्त्यानियोगानुकूलोव्यापारोनिमंत्रणपदार्थइ-
त्यर्थः आवश्यकइतिश्राद्धभोजनादावित्यर्थः प्रेरणेत्वस्यदौहित्रादेरित्यादिः तथाचावश्यके श्राद्धभोजनादौ दौहित्रादेरिष्टसाधनताबो-
धनंनिमंत्रणमितिफलितं यथेह भुंजीतभवानिति कामचारेति स्वाभिलषितेकामचारेणप्रवृत्तस्येष्टसाधनताबोधनमित्यर्थः यथे-
हासीतेति अनुज्ञातुः प्रवृत्तप्रयोजनस्येतरप्रवृत्तिप्रतिबंधेनतत्प्रवृत्तिविषयेइष्टसाधनताबोधनम् यथारथ्यंकुरुत नकुरुध्वयं-
थाहितमितिच एतदादिसर्वोपलक्षणम् सत्कारपूर्वकोव्यापारइति संमानपूर्वमध्यापनादिव्यापारइष्टसाधनमित्यर्थः अयमेव
चाभ्यर्थनेतिव्यवह्रियते उदाहरणं माणवकमध्यापयेद्भवानिति संप्रश्नः संप्रधारणम् प्रार्थनानुस्वाभिलषितवस्तुदानादौ स्वीये-
च्छाबोधनम् यथा भोजनंलभेयेति॥ ९॥ ॥एतच्चतुष्टयेति विध्यादिचतुष्टयेत्यर्थः लाघवादिति तस्यशक्यतावच्छेदकत्वकल्प-
नेलाघवादित्यर्थः विधिवाक्याद्विध्यादीनांबोधस्यसर्वसिद्धत्वेपितत्तद्रूपस्यशक्यतावच्छेदकत्वकल्पनेगौरवादुक्तानुगतरूपस्यै-
वशक्यतावच्छेदकत्वमुचितमितिभावः तत्रहरिसम्मतिमाह उक्तंचेति किंभेदस्येति तत्तद्रूपेणपार्थक्यस्येत्यर्थः तत्तद्रूपेणश-
क्तेरनंगीकारादितिभावः तर्हितथापादानंसूत्रकृताकिमितिकृतमतआह न्यायेति न्यायः शक्तिः तद्व्युत्पत्तयेतद्ग्रहायेत्यर्थः॥ ८॥

स्यविध्यर्थत्वमामनंति अन्यथासिद्धत्वंतु विधेः प्रवृत्तितात्पर्य्यकत्वावधारणादुत्तरकालकल्प्यम् इत्थंचग्रहणश्राद्धादौ नित्यत्वनैमित्ति-
कयोरिवनित्यश्राद्धसंध्यादौ नित्यत्वकाम्यत्वयोरप्यविरोधात्लाघवाद्रात्रिसत्रन्यायेनदद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् संध्या
मुपासते येतु सततं संशितव्रताः विधूतपापास्तेयांति ब्रह्मलोकमनामयमित्याद्यर्थवादोपस्थितपितृतृप्ति ब्रह्मलोकावाप्त्यादिकमेवफ
लंकल्प्यते यद्यप्यन्यत्रसमवायघटितसामानाधिकरण्येनैव यागस्वर्गयोः कार्यकारणभावः क्लृप्तस्तथाप्युक्तवाक्यप्रामाण्याच्छ्राद्धपितृ
तृप्त्योरुद्देश्यत्वसमवायघटितसामानाधिकरण्येन सकल्पनीयः कर्तृनिष्ठादृष्टस्यतु न पितृतृप्तिजनकत्वम् व्यधिकरणत्वात् श्रा
द्धानंतरकृतकर्मनाशाजलस्पर्शादिना तन्नाशेन पित्रादिस्वर्गानापत्तेश्च पितॄणां मुक्तत्वेतु स्थानार्थ्येव तत्कल्प्यताम् अतएव शास्त्रा
देशितं फलमनुष्ठानरीत्युत्सर्गइतिवृद्धाः स्वतः पुरुषार्थदुःखप्रागभावः प्रत्यवायानुत्पादो वा न तथा कल्पनीयः तत्साधनत्वं च योग
क्षेमसाधारणम् नित्येकृते प्रत्यवायानुत्पादनियमात्तत्त्वेदुःखप्रागभावावश्यंभावाच्च तथाच सर्व शक्तौ प्रवृत्तिः स्यात्तथाभूतो
पदेशादिति सर्वशक्त्यधिकरणपूर्वपक्षसूत्रपुरुषार्थस्य भाव्यस्योभयत्रतौल्येन यथा काम्यं फलापातं तथा नित्यमपीति व्याख्यान
भेदः नन्विष्टसाधनत्वस्य विध्यर्थत्वे साधनत्वस्याख्यातेनाभिधानाज्ज्योतिष्टोमेनेत्यत्र तृतीयानुपपत्तिरिति चेन्न द्रव्यं कारकमिति
पक्षे शंकानवकाशात् शक्तिः कारकमिति पक्षेपि फल्यर्थव्यापारनिष्ठभावनाभाव्यनिर्वर्तकत्वरूपकरणत्वस्याभिधानेपि याग
निष्ठस्य तस्यानभिधानेन तत्समानाधिकरणज्योतिष्टोमपदात्तदुपपत्तेः न कलंजं भक्षयेदित्यादेर्निषेधविधित्वोपपत्तये नञ्स
मभिव्याहारे विधेरनिष्टसाधनत्वे शक्तिरुपगंतव्या तस्यापि धात्वर्थेन्वयः नञ्तात्पर्य्यग्राहकः कलंज कर्मकभक्षणमनि-
ष्टसाधनं इतिबोधः यद्वा नञर्थाभावविशेष्यक एव बोधः तेन च स्वप्रतियोगिन्यनिष्टसाधनत्वाक्षेपात्ततो निवृत्त्युपपत्तिरिति भावः

बलवदनिष्टाजनकइष्टसाधने चंद्रमंडलानयनैबलवदनिष्टाननुबंधिनि साध्ये निष्फले न प्रवृत्तेः इष्टसाधने कृतिसाध्यमधु विषसं
पृक्तान्नभोजने च प्रवृत्त्यदर्शनात् प्रवर्त्तकज्ञाने विषयतावच्छेदककोटौ तेषां निवेशस्यावश्यकतया विधिवाच्यत्वं श्रुतेः प्रवर्त्तकत्व
निर्वाहार्थमावश्यकमिति नैयायिकमतं निराकर्तुमाशंकते यद्यपीति एतत् प्रवर्त्तकज्ञानविषयतावच्छेदकत्वम् तत्सत्त्वे प्रवृत्तेः
माह तज्ज्ञानस्येति कृतिसाध्ये पि तज्ज्ञानात् प्रवृत्तिदर्शनादिति भाव. निराचष्टे तथापीति लोकत एवेति लौकिकप्रमाणादेवेत्यर्थः
अनन्यलभ्यो हि शब्दार्थ इति न्यायादिति भाव वस्तुतस्तु उक्तन्यायस्य परांतरलभ्ये च शक्तिरन्यथा कस्यापि पदस्य शक्तिर्न सिद्ध्ये
यद्यप्येतत् कृतिसाध्यत्वस्यापि तज्ज्ञानस्य प्रवर्त्तकं कस्मात् तथापि यागादीष्टसर्वत्र तल्लोकत एव यागस्य तत्त्वस्य अन्यलभ्य
त्वान्न तद्वाच्यम् बलवदनिष्टाननुबंधित्वज्ञानं च न हेतुः द्वेषाभावेनान्यथासिद्धत्वात् आस्तिकस्य मुमुक्षोर्नरकसा
धनताज्ञानदशायामपि तद्द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च तस्मादिष्टसाधनत्वमेव प्रवर्त्तना ॥ ८ ॥
सर्वस्यापि शब्दातिरिक्तप्रमाणगम्यत्वात् किंच इष्टसाधनत्वादीनां सात्त्र्येण यदि शक्यत्वं तदा स्वरसु...रीति निराकरण
क्षमा किंतु प्रवर्त्तकज्ञानविषयतावच्छेदकत्वोपलक्षणानुगतीकृतेषु साव पलक्षणस्य च कृतिसाध्यत्वसाधारणतया तमापि सि
ष्यंती शक्तिः केन प्रतिषिध्येति स तु एवावधार्यताम् यत्तु कृतिसाध्यत्वे वेदादवगतेऽप्यशक्तस्य यागादौ प्रवृत्त्यनुदयादर्शनाद् शक्तिवि
षयतज्ज्ञानस्यैव प्रवृत्तिहेतुत्वं वाच्यम् तस्य च यागो मत्कृतिसाध्यो मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वात् मत्कृतिसाध्यपा
कवदित्यनुमानेनैवागमान्नास्य शक्यत्वमित्याशयइति तन्न इष्टसाधनताज्ञानस्यापि मदंशविषयकस्यैव प्रवर्त्तकत्वात् तस्य

विधिवाक्यादलाभेनेष्टसाधनत्वेऽशक्यभ्युपगमेऽपि प्रवर्त्तकत्वानुपपत्तेरपरीहारात् यदि तु प्रतिपुरुषविधेय ... त्तेनैव तत्पुरु-
षीयेष्टसाधनताबोधकत्वात्प्रवर्त्तकत्वोपपत्तौ नानुमानावश्यकत्वमिति विभाव्यते तदाकृतिसाध्यत्वेऽपि तुल्यमिति बलवदनिष्टाननु-
बंधित्वस्य विध्यशक्यत्वे न कलंजं भक्षयेदित्यत्र भक्षयेदित्यस्य भक्षणे निष्टसाधनत्वाबोधकतया निषेधविधित्वानुपपत्तिरिति
तत्रापि विधिशक्तिरभ्युपेया अनिष्टे बलवत्त्वं चेष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तत्वं तेन नायाससाध्ये कर्मणि प्रवृत्त्यनुपपत्तिः क-
ष्टं कर्मेति न्यायेन सुखमात्रजनककर्मासंभवाच्च नो कार्यस्य सिद्धिः यदि च कदाचित्तत्संभवस्तदेष्टोत्पत्त्यनान्तरीयकत्वमेव तद्वाच्यं
एतेन बलवदनिष्टाननुबंधित्वज्ञानस्य प्रवर्त्तकत्वमेव न बह्वायाससाध्ये कर्मणि प्रवृत्त्यनापत्तेः बहुतरदुःखस्य तत्र जायमानत्वा
दल्पदुःखस्यापि कुतश्चिद्बलवत्त्वेनानुगतबलवत्त्वस्य निर्वक्तुमशक्यत्वाच्चेति तत्तस्य विधिशक्यत्वसंभावनेति केषांचित्प्रलपितं
प्रत्युक्तम्  अथोक्तयुक्त्या निष्टत्वेनानिष्टसाधनत्वाभावज्ञानस्य न प्रवर्त्तकत्वं किं त्वगम्यां न गच्छेच्छाकं न भुंजीतेत्यादिवाक्या
नां प्रामाण्योपपत्तये विशिष्य नरकत्वादिरूपेण तदसाधनस्य तथात्वं वाच्यम् तथा च शक्यानंत्यं शक्तिग्रहानुपपत्तिश्चेति चेन्न द्वे-
षविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नाभावकूटे तादृशाभावत्वेनानुगत एकैव विधिप्रत्यय
स्य शक्तिः उपलक्षणत्वादेव च द्वेषविषयतावच्छेदकत्वं परित्यज्य नरकत्वाद्यवच्छिन्नासाधनत्वमात्रं प्रतीयते क्वचिच्च नरकासा-
धनत्वं क्वचिद्रोगासाधनत्वं प्रतीयते इत्यत्र तात्पर्यमेव नियामकम् न चातिप्रसक्तस्योपलक्षणत्वाभ्युपगमे प्रमेयत्वस्यैव तथात्वमस्तु
लाघवादिति वाच्यं सुखाद्यसाधनत्वस्य विध्यर्थताविरहेण तत्साधारणप्रमेयत्वस्योपलक्षणत्वासंभवात् अन्यतानजनकसाधारणद्वे
षविषयतावच्छेदकत्वाद्द्विष्टसाधारणरूपस्यापि द्विष्टोपलक्षणताकल्पना नौचित्यात् तात्पर्याभावादेव सुखाद्यसाधनता-

वोधनापत्तौतस्यविध्यर्थत्वेपिनक्षतिरितिगुरुयुक्त तथात्तेन तात्पर्येणभुक्तिकालीनंनभुंजीतेतिप्रयोगापत्ते स्तस्माद्द्वेषविषयतावच्छे
दकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नप्रतियोगिताकाभावत्वेनानुगतेनातादृशाभावेविधिप्रत्ययस्यशक्तिरितिप
रिष्कृतप्राचीननैयायिकमतंनव्यरीतिमवलम्ब्यदूषयति बलवदनिष्टेति निरुक्तबलवदनिष्टाजनकत्वज्ञानंचेत्यर्थः नहेतुः
नप्रवृत्तिहेतु क्वचित्तथैवपाठः तथाचनतद्विषयस्यविधिवाच्यत्वमितिभावः तस्यप्रवृत्त्यजनकत्वेहेतुमाह द्वेषाभावेनेति मधुवि
षसंपृक्तान्नभोजनेद्विष्टसाधनताज्ञानाद्द्वेषविषयेप्रवृत्तिवारणायतद्विषयकप्रवृत्तिंप्रतितद्विषयकद्वेषस्यक्लृप्तप्रतिबन्धकतया
प्रतिबन्धकाभावविधयावश्यक्लृप्तनियतपूर्ववर्तिताकद्वेषाभावेनैवोपपत्तौबलवदनिष्टसाधनत्वज्ञानस्यनहेतुत्वंतेनान्यथासि
द्धेरित्यर्थःनन्वन्वयव्यतिरेकसहचारज्ञानस्यकारणताग्रहस्यैवभयप्रसक्त्याप्त्तैनैवास्यान्यथासिद्धिर्दुर्वारेत्यतआह आस्तिकेति सच
परलोकाङ्गीकारवान् तदनङ्गीकर्तुर्नरकसाधनताज्ञानासंभवात्तद्विशेषणमुपात्तम् आस्तिकस्यनरकसाधनताज्ञानेनतद्द्वेषाव
श्यंभावेनप्रवृत्त्यसंभवादाह कामुकेति तत्त्वचोत्कटरागवत्त्वं रागोत्कटत्वंजातिविशेषोविषयिताविशेषोवा प्रवृत्तेरित्यस्यागं
म्यागमनेइत्यादिः द्वेषाभावदशायामित्यनेनद्वेषसामग्रीविरहस्यदर्शितं तच्चविषयतयाद्वेषंप्रतिउत्कटेच्छासामग्रीविरहविशि
ष्टद्विष्टसाधनताज्ञानस्यहेतुतयातादृशसामग्र्या स्तात्तेनप्रतिबन्धकतयाबोध्यम् व्यभिचारादेवेति नहेतुरितिपूर्वेणान्वितं
अतएवश्येनेनाभिचरन्यजेतेत्यत्रनविध्यर्थबाधः बलवदनिष्टानु बन्धित्वज्ञानस्याप्रवर्त्तकत्वेनतद्विषयस्यतस्यविध्य
र्थत्वस्यैवाभावादितिभावः उपसंहरति तस्मादिति इष्टसाधनत्वमेवेत्येवकारेणकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वयोर्व्यव
च्छेदः व्यापस्यलौकिकप्रमाणेनैवावगमादन्यस्यप्रवर्त्तकज्ञानाविषयत्वादितिभावः प्रवर्त्तनेति सिद्धार्थपदइत्यर्थः ॥

इष्टाभ्युपायत्वादित्यादि इष्टसाधनत्वादन्यः कृतिसाध्यत्वादिः क्रियासु यागादिरूपासु पुंसां प्रवर्त्तकोन ज्ञाननिष्ठप्रवृत्तिजनकतायां विषयतयावच्छेदकोनेत्यर्थः यजेतेत्यादिवाक्यांतर्गतलिङादिशक्यो नेतियावत् चोदितो यतः प्रवृत्तिहेतुं तद्धेतुतावच्छेदकमेव प्रवर्त्तनापदेन व्यपदिशंतीत्यर्थः परंतु बलवदनिष्टाननुबंधित्वज्ञानस्य द्वेषाभावेनान्यथासिद्धतया प्रवर्त्तकत्वेपि कृतिसाध्यताज्ञानस्य प्रवर्त्तकतायाः सर्वसिद्धत्वेन तद्विषयस्य तस्य विध्यर्थत्वमावश्यकम् नचतद्धेतुतायामेव मानाभावः कृत्यसाध्ये प्रवृत्तिस्तु कृत्यसाध्यता ज्ञानस्य प्रतिबंधकतया तत्र तदभावादेव नेति वाच्यं कृत्यसाध्यताज्ञानस्य प्रतिबंधकत्वे

उक्तंच मंडनमिश्रैः पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः प्रवृत्तिहेतुं धर्मंच प्रवदंति प्रवर्त्तनामिति प्रपंचितं चैतद्वैयाकरणभूषणे॥

ऽऽकृतिसाध्यत्वाभाव तद्व्याप्य तदवच्छेदकधर्मदर्शनादीनां प्रतिबंधकत्वस्य वक्तव्यं तयातावदभावानां प्रवृत्तिं प्रति हेतुता कल्पनापेक्षया कृतिसाध्यताज्ञानत्वेन हेतुतायां लाघवस्य स्फुटतरत्वात् कृतिसाध्यताज्ञानाभावस्य सर्वदासत्त्वेन प्रवृत्त्यापत्तेश्च अपिच कृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वे कृतिसाध्यत्वप्रकारकपाकविशेष्यकज्ञानत्वावच्छिन्नाभावमानसं प्रतिपाकादिगोचरप्रवृत्तिसामग्र्याः प्रतिबंधकत्वं नकल्प्यत इति लाघवं तादृशप्रवृत्तिसामग्रीकाले पाकविशेष्यककृतिसाध्यत्वप्रकारकनिर्णयस्यावश्यकत्वेन तस्यच स्वरूपसत एवोक्तज्ञानाभावमानसे त्वत्प्र प्रतिबंधकतयैवोपपत्तेः भवन्मते तादृशमानसे तादृशप्रवृत्तिसामग्र्याः प्रतिबंधकत्वकल्पनेन गौरवं स्पष्टमेव एवमप्रामाण्यविशिष्टपाक

रकज्ञानवानहमिति मानसे पाकगोचरप्रवृत्तिसामग्र्याः प्रतिबंधकत्वाकल्पनेनापि लाघवम् तादृशविशिष्टविषयिताशालिमानससा
मग्रीकाले प्रामाण्यज्ञानास्कंदितोक्तज्ञानस्यावश्यकत्वेनाप्रामाण्यज्ञानानास्कंदितपाकादिविशेष्यककृतिसाध्यत्वप्रकारकज्ञानघ
टिततादृशप्रवृत्तिसामग्रीतादृशमानससामग्र्योर्मेलनस्यैवाभावात् भवन्मतेकृतिसाध्यत्वाभावप्रकारकपाकादिविशेष्यकज्ञानाभा
वघटिततादृशप्रवृत्तिसामग्रीतादृशमानससामग्र्योर्मेलनेबाधकाभावेनतादृशमानसेनादृशप्रवृत्तिसामग्र्याः प्रतिबंधकत्वस्यावश्य
कल्पनीयत्वेनगौरवस्यातिस्फुटत्वादनयैवदिशानिष्टसाधनत्वज्ञानाभावादीनामपिहेतुतानिरसनीयेत्याहुः गुरवस्तुनेष्टसाधनत्वनि
ध्यर्थं क्षणिकतयावगतेयागेनस्वबोधयितुमशक्यत्वादेवपरपराप्तसाधनत्वमपि तथा द्वाराऽनुपस्थितेः शाब्दबोधप्रयोजकान्वय
प्रयोजकरूपवत्त्वयोग्यतायास्तत्राभावात् साधनतासामान्यबोधस्यैकविशेषबाधेतदितरप्रकारकत्वनियमादसंभवदुक्तिकः
किंचयागोनकर्तव्यतयाप्रतीयतेकाम्यादन्यत्काम्यव्यवहितपूर्ववर्तिसाधनमेवकामीकर्तव्यतयावेतीत्यस्यानुभवसिद्धत्वात् तस्माद्व्यवहितपू
र्वीभूतकाम्याव्यवहितपूर्ववर्तिसाधनमपूर्वमेवकार्यत्वेनशक्यम् कार्यत्वंचकृत्युद्देश्यत्वं तत्रविशेषणीभूतकृतेराश्रयविषय
योराकांक्षायाविषयतयायागस्याश्रयतयास्वर्गकामः संबध्यते सुखदुःखाभावादेर्लौकिकप्रमाणेनैवापूर्वस्यापिवेदनकृत्युद्दे
श्यत्वबोधनादपौरुषेयेन लिङ्प्रामाण्यशंकानवकाशात्तस्यतत्त्वम् तथाचस्वर्गकामोयजेतेत्यत्रस्वर्गकामवत्कृत्युद्देश्योया
गविषयकोनियोगइतिबोधः अत्रापूर्वस्ययागविषयकृत्युद्देश्यत्वमेवयागविषयकत्वम् यागस्यतादृशकृतिविषयत्वेपु
रुषस्याश्रयत्वेचान्वयितावच्छेदकमपूर्वकारणत्वमेवयोग्यता यथाघटेनजलमाहरेत्यत्रछिद्रेतरघटत्वं योग्यतावच्छेदकोप
स्थितिर्घटेनेत्यस्यार्थाध्याहारात् प्रकृतेचोपादानिकप्रमाणवशात्तत्कल्पनैव तच्छक्तैर्यैवाशक्योपस्थित्यभ्युपगमेलक्षणोच्छेदः

तिनसंप्रतंस्वशक्त्यान्वयबोधकस्यैवस्योपपादकसकलपदार्थबोधकत्वोपगमान्नच गंगायांघोषइत्यादौगंगादिपदानांस्वशक्त्या-
न्वयबोधकत्वंयेनतदुपपादकसकलपदार्थबोधनायौपादानिकप्रमाणावकाशः स्यात् अजहत्स्वार्थलक्षणानुनास्मन्मतसिद्धा।
तथाचस्वीयत्वेनकार्य्यबोधोनियोज्यः समभिव्याहृतपदोपस्थापितफलकामश्चतथेति काम्येस्वर्गकामोनियोज्यः एवंचवेदबो-
धितमपूर्वमुद्दिश्यपुरुषप्रवृत्त्युपपत्तौनेष्टसाधनत्वंविध्यर्थः इच्छाविषयसाधनतात्वेनतत्रशक्तौप्रवर्त्तकाज्ञानानिर्वाहः स्वर्ग
जनकतात्वेनशक्तौनानार्थतापत्तेरितितन्मतस्यविकल्पग्रस्तत्वाच्च अपिचनित्यनैमित्तिकस्थलेषुचित्वकालजीविनोराहूप
रागवतश्चममसंध्यास्नानविषयकोनियोगइतिबोधान्नफलापेक्षाभवन्मतेतुचंद्रसूर्य्यग्रहेस्नायादहरहः संध्यामुपासीतेत्या
दौफलाश्रवणाद्विध्यर्थबाधःप्रसज्येतममतुवैदिकेकर्मणिवेदबोधितमपूर्वमुद्दिश्यैवपुरुषःप्रवर्त्ततेतस्यैववेदेनपुरुषार्थ
त्वबोधनात्काम्येफलावाप्तिरानुषंगिक्येव अतएवनित्येपितदुद्देशेनप्रवृत्तिरुपपद्यतेइत्याहुः तदपरेनक्षमंते लोकेप्रवर्त्तक
त्वेनसर्वसंमतंयदिष्टसाधनत्वज्ञानंतद्विषयेष्टसाधनत्वेविधिशक्तिकल्पनयैवविधेः प्रवर्त्तकत्वोपपत्तौनियोगस्यविधिवा
च्यत्वेमानाभावात् वेदबोधितस्वर्गसाधनत्वानुपपत्त्याहितत्कल्पनं नचतस्यपूर्वमुपस्थितिरस्तियेनतत्रशक्तिग्रहः एकविशे
षबाधेसामान्यज्ञानस्यतदितरप्रकारकत्वनियमेपिसाक्षात्साधनतातिरिक्तसाधनतात्वेनबोधेबाधकाभावात् तादृशसाधन
त्वेयोग्यतावच्छेदकंचपरंपराघटकमपूर्वं तथाचस्वर्गसाधनत्वशक्त्यैवनिर्वाहे औपादानिकप्रमाणवशादपूर्वोपस्थितावपि
ननद्वाच्यम् अपूर्वानुपस्थितौपरंपरासाधनत्वमपिकथंवेदोबोधयेदितित्वनुपस्थितेःपूर्वंकथंशक्तिग्रहइत्यनेनतुल्ययो-
गक्षेमम् एवंकाम्याव्यवहितपूर्वसाधनंकामीकर्त्तव्यतयावैतीत्यपिनकाम्यसाधनताज्ञानस्यैवप्रवर्त्तकत्वान्नतुतत्राव्यव-

हितत्वनिवेशोपि गौरवान्मानाभावाच्च दृश्यते च तदर्थिनस्तत्प्रयोजके जलाहरणादौ प्रवृत्तिः इष्टसाधनत्वे यथा शक्तिग्रहस्तथोक्त
अपूर्वस्याशक्यत्वेपि यथा नित्ये नैमित्तिके प्रवृत्तिस्तथोपपादितम् अस्तु तर्हि नवैव सा दुःखरूपयागादौ निष्फलत्वात् दुःखैकफलत्वाच्चेप्र
वृत्तिमात्रं दृष्टसाधनताज्ञानस्य हेतुत्वावधारणात् प्रवृत्तिविषयसाध्यत्वे सतीष्टत्वरूपसाध्यत्वमपि नापूर्वस्येति न तदुद्देशेनापि प्र
वृत्तिः सम्भाव्येत निष्फलतयावगते प्रवृत्तिस्तु श्रुतिसहस्रेणाप्युत्पादयितुमशक्येति वेदबोधितत्वान्नित्ये प्रवृत्तिरिति क्षत प्रतारण
मात्रं अत एव यज्ञो दानं तपः कर्मेत्यादिना निर्दिष्टेपि प्रत्यवायपरीहारः स्वर्गादिफलमनुद्दिश्य क्रियमाणानामेषां फलं भवतीत्यर्थ
केनाष्टादशाध्याये भगवद्गीतासु पावनत्वमुक्तं किञ्च पचेतेत्यादिलौकिकविधेरिष्टसाधनत्वबोधकत्वेन प्रवर्त्तकत्ववद्वैदिकविधे
रपि तच्छुण्वैव प्रवर्त्तकत्वात् ज्ञाननिर्वाहे तस्यानुपस्थितापूर्वे शक्तिकल्पनं निष्प्रमाणकमेवेति परे तु लिङादिश्रवणेऽयं मां प्रेर
यतीति नियमेन प्रतीतेरभिधानात्मकः प्रेरणापरपर्य्यायो व्यापारो लिङादिवाच्यः सा च लिंगसंख्यानन्वयित्वाद्व्यापारपदेन प्रव
र्त्तकनिष्ठत्वात् प्रवर्त्तनापदेन च व्यवह्रियते प्रेरणात्वेन तस्याः सविषयत्वमपि शक्यतावच्छेदकं च मैत्र्यादिधात्वर्थतावच्छेदक
यासिद्धप्रेरणात्वमखण्डोपाधिः स च व्यापारः सम्भवो लोके प्रवर्त्तकपुरुषनिष्ठोभिप्रायविशेष एव तत्र प्रवर्त्तकत्वं च लिङाद्यु
च्चारयितृत्वम् वेदे तु प्रयोक्तुरसम्भवाल्लिङश्च न शब्दस्वरूप एव तत्वे सति स्वतन्त्रत्व राजादिप्रेरितपदाते लिङाद्युच्चारयितृत्वे
पि प्रवर्त्तकत्वेनाव्यवह्रियमाणत्वात् स्वतन्त्रेति अहिष्टया प्रोक्तया च तया स्वविषये इष्टसाधनत्वानुमानं ततश्च प्रयोजनप्रवृत्तिः प्रा
युक्ता हि पचेत्येतो विषभोजने इष्टसाधनत्वानवगते एतेन त्वयेति आप्तोक्तयापि विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः इत्यादि
कयापि तस्मिन्निष्टसाधनत्वानुमानादहिष्टेति तत्र विषभोजनविषयकाभिप्रायस्य तदीयद्वेषविशिष्टत्वान्न व्यभिचारः ॥

प्रत्ययानामिति व्युत्पत्तेरेकार्थीभाववादिमतेसत्त्वेपिनास्मन्मतेसासार्वत्रिकीसमासएवासंभवात् किंतुप्रकृतेव्युत्पत्त्यंतरमेवकल्प
येदित्यभिप्रेत्याहाथेति अलंप्रकल्पनामिति समस्यमानपदार्थविषयतानिरूपितविषयतासंबंधेनशाब्दंप्रतिविशेष्यतासंबंधेनप्र
त्ययजन्योपस्थितेःकारणत्वांतरकल्पनामित्यर्थः ननुप्रत्ययानांसन्निहितपदार्थगतस्वार्थबोधकत्वरूपाव्याससमाससाधारण्ये
कैवव्युत्पत्तिः सन्निहितत्वंचप्रकृतिघटकत्वेसतिप्राग्वर्त्तित्वमितिनोक्तदूषणमतआह दिगिति नथाकल्पनेचोक्तव्युत्पत्त्यपेक्ष

अथसमस्यमानपदार्थगतस्वार्थबोधकत्वंसमासोत्तरविभक्तेः कल्प्यतइति चेन्न अलंप्रकल्पनांलंप्रव्युत्पत्तित्यागं
चापेक्ष्यसमुदायशक्तिकल्पनस्यैवयुक्तत्वादितिदिक् अपिचसमासेविशिष्टशक्त्यस्वीकारेराजपुरुषश्चित्रगुर्नीलो
त्पलमित्यादौसर्वत्रानन्वयप्रसंगः राजपदादेःसंबंधिनिलक्षणायामपितंडुलःपचतीत्यादौकर्मत्वादिसंसर्गेणतंडुलादेःप्र
कारावन्वयवारणायप्रातिपदिकार्थप्रकारकबोधंप्रतिविभक्तिजन्योपस्थितेर्हेतुतायाआवश्यकत्वात्पुरुषादेस्तथात्वाभा

यापदत्वस्यप्रकृतित्वघटितस्यव्युत्पत्तौनिवेशेगौरवमित्यादि दिगर्थः ननुप्रत्ययानामितिव्युत्पत्तेःप्रकृतिप्रत्ययघटिततयात्रप्रकृ
तित्वप्रत्ययत्वयोरनुगतयोर्दुर्वचत्वेनतत्तद्व्यक्तिभेदेनकार्य्यकारणभावोवाच्यस्तथाचसमासस्थलेसमस्यमानपदार्थस्यप्रत्यया
र्थान्वयाभ्युपगमेबाधकाभावोऽतआहापिचेति अनन्वयप्रसंगइति नामार्थयोरितिव्युत्पत्तेरितिभावः अनन्वयमेवाह राजप
दादेरिति लक्षणायामपीत्यपिनासंबंधलक्षणायांनितरामनन्वयाभावः सूच्यते॥ ९० ॥ ९० ॥ ९० ॥ ॥

तचोक्तव्युत्पत्तेस्तंडुलः शुभ्र इत्यादौ व्यभिचारो तस्मात् तंडुलः शुभ्र इति अभेदेनैवान्वय इति तथा च तंडुलान्वयिनि प्रातिपदिकार्थे विभक्तिजन्योपस्थितेः सत्त्वान्न तत्र व्यभिचार इति भावः शुभ्रेण तंडुलेनेत्यादौ व्यभिचारमाशंक्य निराचष्टे अभेदार्थिकेति अथवा
टइव नत्समानाधिकरणभीष्मादिभ्यो द्वितीयादिविभक्तेरनभिहितसूत्रे भाष्यकृताभिधानात् सामानाधिकरण्यसमानाधिकरणयो
र्विशेष्यविशेषणयोर्मावस्याभेदस्य विशेषणपदोत्तरविभक्त्यर्थत्वलाभात्तथापि शुभ्रेणेति तृतीयाजन्याभेदोपस्थितिसत्त्वान्न व्यभि
चार इति भावः नन्वत्र यदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिर्भेदस्य केवलान्वयित्वात् यदि भेदप्रतियोगिकाभावस्तदा नीलो

तंडुलः शुभ्र इत्यादौ च प्रातिपदिकार्थकप्रथमार्थे तंडुलादेस्तस्य च शुभ्रेऽभेदेनैवान्वयः शुभ्रेण तंडुलेनेत्यादौ च
विशेषणविभक्तेरभेदार्थो पार्ष्ठिको वान्वय इति नातिप्रसंगः नन्वेवं च समासे परस्परमन्वयासंभवात् व्यपेक्षे
च समुदायस्य तादृशे विशिष्टार्थे शक्तिः किंच राजपुरुष इत्यादे संबन्धिनि संबन्धे वा लक्षणा नास्ति ॥ ९ ॥ ॥

वह्निरिति वाक्यस्य प्रामाण्यापत्तिर्हित्वादिना नीलभेदाभावस्य वह्नौ सत्त्वात् विशेषणविभक्त्यर्थैकदेशे भेदे प्रकृत्यर्थस्यानन्वयापा
त्तिश्च नन्वभेदेऽभावे च द्वितीयादेः शक्तिः भेदे च प्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेनान्वयः उक्तसंब
न्धेन प्रकृत्यर्थविशिष्टभेदस्य तु तत्त्वावच्छिन्नप्रतियोगिताकत्वेनाभावेऽन्वयोपगमान्नोक्तापत्त्यादिरिति वाच्यम् प्रमेयो घट इत्यादौ
प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्योक्तप्रकारासंभवात् नीलघटादिपरनीलपदघटितनीलो घट इति वाक्यस्य प्रामाण्यापत्तेश्च

नीलत्वादिना नीलभेदाभावस्य घटेऽबाधात् नच तद्व्यक्तित्वावच्छिन्नाभेद एव विभक्त्यर्थः तथा सत्यपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य भाना
संभवेन तदवच्छिन्नप्रतियोगिताकाभावे शक्तिग्रहासंभवेनापूर्वव्यक्त्यभेदान्वयानुपपत्तेः अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वा
नुपपत्त्या एकधर्मावच्छिन्नप्रतियोगिताकाभावेऽपरधर्मावच्छिन्नप्रतियोगितायाः संबंधतया भानासंभवाच्चेति चेन्न अभेदस्तादात्म्यं
तच्च स्ववृत्त्यसाधारणो धर्मः असाधारण्यं च स्वप्रतियोगिवृत्तित्वस्य सामानाधिकरण्योभयसंबंधेन भेदविशिष्टं यत्तदन्यत्वमित्येक
मात्रवृत्तिधर्म एव प्रवृत्तोऽसः तस्मिन्नाधेयतया प्रकृत्यर्थान्वयः अपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य विशिष्यस्यशयितुमशक्यत्वेप्येकमा
त्रधर्मत्वेन सामान्यप्रत्यासत्त्या सुग्रहात्सर्वं सुस्थमिति पार्ष्णिकाः इति शाब्दबोधे ताद्रकालिक इत्यर्थः अन्वय इति तद्बोध इत्यर्थः अर
णाधिकरणरीत्या सर्वेषां विभक्त्यर्थानां प्रथमं क्रियायामेवान्वयेन तत्र शुक्लादिपदार्थान्वये विभक्तिजन्योपस्थितिसत्त्वात्तत्पक्षेपि
नोक्तव्युत्पत्तेर्व्यभिचार इति भावः ननु नामार्थयोरिति व्युत्पत्ते राजा पुरुषस्तंडुलः पचतीत्यादौ राज्ञः स्वस्वामिभावसंबंधेन पुरुषे
तंडुलस्य कर्मतासंबंधेन धात्वर्थपाकेऽन्वयवारणायावश्यकत्वेपि तत्र राजा पुरुषस्तोकं पचतीत्यत्राभेदसंबंधेनान्वयाद्व्यभिचार
वारणाय भेदातिरिक्तसंबंधावच्छिन्नत्वं नामार्थनिष्ठप्रकारतायां निवेशनीयं च विशेषणविभक्तेरभेदार्थकतया निर्वाहः कट एव क
र्मेति भाष्यव्याख्यावसरे भीष्मादीनां स्वयमकर्मकत्वेपि विशेष्यसंबंधिविभक्त्यैव भीष्मादिपदोत्तरं भवितव्यम् तदेकयोगक्षेमत्वात्के व
लानां च प्रातिपदिकानां प्रत्ययः परश्चेति नियमेन प्रयोगानर्हत्वात् पश्येश्वरसुहृदः स्वयं निर्धना अपि तदीयधनेनैव तत्फलभाज ए
वं गुणा अपीत्यनभिहितसूत्रे वदता कैयटेन विशेषणविभक्तेः साधुत्वमात्रार्थकत्वस्य स्पष्टमेवोक्तं विभक्त्यर्थप्रातिपदिकार्थविशेष्यकपुरु
षादिप्रकारकबोधस्याननुभवाच्च अत एव व्युत्पत्तौ भेदेनेति पठ्यते तथा च तत्पक्षे लक्ष्यार्थराजसंबंधिनः पुरुषादावन्वयो नानुपपन्नो

विग्रहस्य विरोधादिति अत्र यद्यपि विग्रहस्य विद्यमानसमानार्थकत्वेनाविद्यमाणजन्यबोधेयत्वाद्विशेष्यकत्वे सति पदार्थप्रकारक-
त्वतत्तद्विशेष्यकतत्प्रकारकबोधजनकत्वम् प्राप्तमुदकं यमित्यादेः प्राप्तोदकादिसमासविग्रहत्वानुपपत्तिः पदवृत्तिस्वाकारणमधी-
नेइत्यादीनां पाचकोवैयाकरणइत्यादिकृत्तद्धितसमासविग्रहत्वानापत्तेश्च तत्र विग्रहविगृह्यमाणजबोधविषयपदार्थानां विशेषणविशे-
ष्यभाववैपरीत्यात् तथापि तज्जन्यबोधीयपदार्थविषयकबोधजनकत्वमपुरुषस्य राजेत्यस्यापि राजपुरुषादिविग्रहत्वापत्तेः किंतु विग्रिय-
माणजबोधजनकत्वं तच्च प्राप्तमुदकं यमित्यादेः प्राप्तोदकादिसमासजबोधविषयाः परस्परसंबद्धानन्ये विषयीभूतास्तयापांतत्
पदार्थोदकादयस्तावद्विषयकबोधजनकत्वं घटकीयाकर्मनेत्येतावन्मात्रस्य घटकर्मकानयनकृतिरिति विग्रहत्ववारणाय यावदि-

राजपुरुषइतिविवरणविरोधात् समाससमानार्थकवाक्यस्यैव विग्रहत्वात् अन्यथा तस्माच्छक्तिनिर्णयो न स्यात्

ति राज्ञः पुरुषः सुंदरइत्यधिकावगाहिनोऽपि राजपुरुषइतिविग्रहत्वमिष्टमेव वस्तुतस्तु शक्तिग्रहणार्थं प्रयुज्यमाने तस्मिन्समासा-
र्थविषयार्थकपदप्रयोगदौर्लभ्यमेव पुरुषस्य राजेत्यादेस्तु विग्रहत्ववारणाय तात्पर्यविषयत्वं विशेषणं तत्र पुरुषप्रतियोगिघटः
कर्मत्वमित्यादिसमुदायस्य घटं नयेत्यादिविग्रहत्वं कुर्मकर्त्रीत्यादीनां तु कर्तृलक्षणापि नाकर्मकारकस्य नाभेदान्वयापत्तेरकुंभ
कारादिविग्रहत्वम् प्रकृते च राजपुरुषइत्यादिसमासस्य राज्ञः पुरुषइतिवाक्येऽसत्त्वात्तस्य विग्रहत्वानुपपत्तिरिति अन्यथेति समासार्थ-
कत्वाभावइत्यर्थः तस्मात् विग्रहवाक्यात् न स्यादिति तत्समानार्थकवाक्यस्यैव तच्छक्तिनिर्णायकत्वादिति भावः॥ ९१॥ ॥

संबंधलक्षणाकल्पं दूषयति नान्य इति नीलोत्पलादिसमाससंग्रहाय समानविभक्तिकेत्यपहाय उक्तम् विरुद्धविभक्तिरहितेति विरुद्ध विभक्तिकधातुप्रातिपदिकार्थयोः स्तोकं पचतीत्यादावभेदान्वयदर्शनादाह प्रातिपदिकार्थयोरिति तथा चाभेदसंसर्गावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबंधेन शाब्दबुद्धिं प्रति विरुद्धविभक्तिरहितपदजन्योपस्थितेर्हेतुतया तस्याराजपुरुष इत्यादिसमासोत्तरपदार्थपुरुषादौ सत्त्वादभेदान्वयो दुर्वार इति भावः ननु विरुद्धविभक्तिराहित्यं व्याससमाससाधारणं न विशेष्यवाचक

नान्यः राजसंबंधरूपः पुरुष इति बोधप्रसंगात् विरुद्धविभक्तिरहि
तप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपंचितं भूषणे॥ ९ ॥

पदस्य विशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं नीलघटमानयेत्यादावभावात् नापि विशेषणवाचकपदस्य विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं विशेष्यपदाप्रकृतिकत्वस्य तदुत्तरत्वस्य तदुत्तरत्वेनाप्रतिसंधीयमानत्वस्य वा नीलो घट इत्यादौ नीलपदोत्तरविभक्तेर्घटादिपदोत्तरविभक्तिभिन्नायां सत्त्वेन तत्राभेदान्वयानुपपत्तेरिति चेत् अत्र केचित् विशेषण

१२०

परे विशेष्यवाचकपदप्रकृतिकविभक्त्यसजातीयविभक्त्यप्रकृतिकत्वमेव विरुद्धविभक्तिराहित्यम् सामान्यवस्तुत्वादिना प्रथमा
न्तादिना च नीलो घट इत्यादौ विशेषणविभक्तेर्विशेष्यविभक्तिभिन्नत्वेपि तत्सजातीयभिन्नत्वाभावेनोक्तविरुद्धविभक्तिराहित्यस्य
सत्त्वादिति वस्तुतस्तु विशेषणविभक्तेः साधुत्वमिति मते विरुद्धत्वस्यार्थभिन्नार्थकत्वं नीलो घट इत्यादौ विशेषणविभक्तेर्नि
रर्थकतया तत्र विशेष्यविभक्तिविरुद्धार्थकविभक्तिर्द्वितीयादिरूपैव तत्प्रकृतित्वस्य विशेषणवाचकपदे सत्त्वान्न तत्संग्रह एवं
नीलं घटमानयेत्यादिसमभिव्याहारस्थले विशेषणविभक्तेरर्थाभावेन तादृशविभक्त्यप्रकृतित्वं विशेषणवाचकपदस्याव्याहतम् अत एव
चैत्रस्य सुतस्य धनमित्यादौ नाभेदान्वयाकाङ्क्षा तत्र विशेषणविशेष्यविभक्त्योर्विभिन्नसंबन्धार्थकत्वात् नापि लोकमध्यीत्यादिसंग्र
ह पूर्वकस्ये तु विशेषणवाचकविभक्तेर्लिङ् विजातीयत्वेनोक्ताकाङ्क्षाया अभावसत्त्वेन तदसंग्रह स्पष्ट एव सारे प्रातिपदिकार्थयो
रिति प्रकृताभिप्रायेणैव तयाश्च विरुद्धविभक्त्यप्रकृतिप्रातिपदिकार्थनिष्ठाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबं
धेन शाब्दबोधे धातुप्रातिपदिकान्यतरजन्योपस्थिति कारणमित्यर्थः फलित इति ननु पूर्वं निरुक्तविरुद्धविभक्तिराहित्यस्याभे
दान्वयबोधाकाङ्क्षात्वे चैत्रस्य सुतस्य धनमित्यादौ तदापत्तिरत आह अपचितमिति विभक्त्यर्थमतन्त्रीकृत्य नामार्थान्वयप्रयोजक
त्वात् इति तत्रोक्तम् तस्यापि सार्थकविभक्त्यप्रकृतित्वमपि विशेषणवाचकपदे निवेशनीयमित्यतात्पर्यम्॥ ६ ॥ ८ ॥

मीमांसकैरपि विशिष्टशक्तिपक्षोऽभ्युपेय इत्याह अत एवेति समासे एकार्थीभावस्य सर्वसंमतत्वादेवेत्यर्थः भक्षमुद्दिश्येति ऋत्विजो ह
विःशेषान्भक्षयंतीति विहितभक्षणमनूद्येत्यर्थः एकप्रसरताभंगापत्तेरितिउद्देश्यविधेयभावेनान्वये पृथगुपस्थितेर्नियामकत्वे
न तदनुरोधेन तदभ्युपगमे विशिष्टार्थोपस्थितिजनकत्वरूपैकप्रसरताभंगापत्तेरित्यर्थः नैर्विशिष्टशक्त्यनभ्युपगमेऽपि विशिष्टलक्ष
णाया अभ्युपगमेनैकप्रसरतायास्तन्मतसिद्धत्वात् न चोद्देश्यतयान्वये पच्छन्दयोगप्राथम्यादीनां विधेयतयान्वये च तच्छन्दयोगादीनां

अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र न भक्ष्यमुद्दिश्य प्राथम्यविधानं युक्तम् एकप्रसरताभंगापत्तेरिति तृतीये [illegible]गेः स्वि
ष्टकृतं यजतीत्यत्रांगानुवादेन न तत्त्रित्वविधानं युक्तम् एकप्रसरताभंगापत्तेरिति दशमे च निरूपितं संगच्छते संगच्छते चारु
णाधिकरणारंभः अन्यथाऽरुणया एकहायन्या पिंगाक्ष्या सोमं क्रीणातीत्यत्रारुण्यपदवदितरयोरपि एकाब्दत्वादिगुणमा
त्रवाचकतया मूर्तत्वात् क्रीणातौ करणत्वासम्भवस्य तुल्यत्वादारुण्यस्येव वाक्याद्भेदशङ्कायाऽसम्भवादिति प्रपं
चितं भूषणे तस्मात्समासशक्तिपक्षो जैमिनीयैरवश्याभ्युपेय इत्यास्तां विस्तरः ३३॥
तिवाच्यम् सति तात्पर्ये प्रथमो भक्षः पंडितो ब्राह्मण इत्यादावुद्देश्यविधेयभावे ॥ तंत्र न यात्र तदभावात्कथं तदापादनमि
त् नादृशं शाब्दबोधेऽसमस्तपदजन्योपस्थितेर्हेतुतानुनदामोदरः पूज्यो राजपुरुषः सुंदर इत्यादिनलथाबोधानुपपत्तेस्तत्र च प्र
थम्यविशिष्टं भक्षणानन्तरमेव विधीयते शाब्दवृत्त्या ततश्च प्राप्ताप्राप्तविवेकेन प्राथम्यविधिः पर्यवस्यतीति सिद्धांतादिति भावः अ
ग्नेरिति तत्र हीज्याशेषभूतत्रित्वविशिष्टयत्किंचिदंगविधानं किंवा त्रित्वविशिष्टाशेषांगविधानमिति संशये प्रकृता विज्याशेषेण

पुरोडाशेन स्विष्टकृते हुतत्वात्स्मापि शेषभूतत्वं किशिष्टाङ्गेरेव स्विष्टकृद्वचनं युक्तमिति पूर्वपक्षे शेषभूतानिकानि चिदंगान्यनूद्य नित्य वि
धाने एकप्रसरताभंगापत्तिस्तस्मात्कस्य सूत्रोक्तं नित्यविशिष्टांगान्तरविधानमिति निर्णीतद्धमाध्यायस्य तृतीये पादे इत्यर्थः कल्पसूत्रोक्ता
नि हृदयाद्येकादशांगानि तु हृदय १ जिह्वा २ वक्षो ३ यकृ ४ द्वृक्को ५ सव्यशो ७ हमये पार्श्वे ८ दक्षिणाश्रोणी १० गुद ११ मिति तत्र श्रोणिद
क्षिणासव्यात् श्रोणी गुद तृतीयमिति नन्वेकप्रसरत्वं न विशिष्टार्थोपस्थितिजनकत्वम् किंतु समासघटकपदयोरुद्देश्यविधेयभावे
नान्वयाबोधकत्वमिति स्रुतत्तिस्तद्भंगापत्तेरिति तदर्थः नतु विशिष्टार्थोपस्थितिजनकत्वं भंगापत्तेरिति नादृशव्युत्पत्तिशरीरं तु सम
सघटकपदार्थे निष्ठविधेयत्वानिरूपितोद्देश्यत्वसंबंधेन शाब्दबुद्धिं प्रति समासघटकपदजन्योपस्थितिः प्रतिबंधिकेति नच तादृश
प्रतिबध्यप्रतिबंधकभावकल्पने गौरवमिति वाच्यम् सर्वत्र विशिष्टशक्तिकल्पनापेक्षया कचित्स[illegible]न्यप्रतिबंधकभावकल्पने
एव लाघवात् वस्तुतस्तु उद्देश्यविधेयभावेनान्वयबोधे व्यस्तपदार्थोपस्थितिसमकालमेव हि स तदा तु पूर्वापरादेव तथान्वयासंभ
वान्नोक्तप्रतिबध्यप्रतिबंधककल्पनापि एकप्रसरता तु प्रथमपदार्थान्वितमस्य विशेष्यकबोधानुभव एवेति मोक्तयुक्त्यामीमांसकैर्वि
शिष्टशक्तिरभ्युपेयेत्यत आह स गच्छतेत्येति वाक्याद्देदेति नचानस्यवाक्यभेदेन प्रकारेण निवेशोपि संभवति अमूर्तत्वेन क्रियाभिः कार
कत्वेन द्रव्यैः समममपि संबंधासंभवात् नच तृतीयया ज्योतिर्येमकरणीभूतप्राकारणिकद्रव्याण्यनूद्य यत्क्रतोर्वृत्तसाहूण्यगणकेनेति
परिच्छेदकत्वेन तदन्वयो नासंभाविता इति वाच्यम् तयास निशक्तिः कारकमिति सिद्धांतभंगापत्तेरित्यपि बोध्यम् उपसंहरति त
स्मादिति जैमिनीयैरितिवदतो नैयायिकमतस्य सद्युक्तिकत्वं ध्वन्यते॥

समानार्थत्वानुरोधादिति समानार्थत्वंच व्याससमासयोः समानविशेष्यप्रकारकबोधजनकत्वं तदनुरोधादित्यर्थः उक्तविग्रहवाक्यांतर्गतराजशब्दस्य संबंधिनि लाक्षणिकत्वान्न विग्रहत्वक्षतिः संबंधार्थकषष्ठ्यंतस्य तु संबंधप्रकारकबोधजनकत्वान्न विग्रहत्वमेवं चित्रागावो यस्येत्यादेरपीत्याशयं प्रकाशयति यद्यपीत्यादि मीमांसकाद्युक्तं तेन सूत्राल्लभ्यत इति तेन हि शे

राजपुरुष इत्यादौ राजा चासौ पुरुष इत्येव विग्रहः चित्रगुरित्यादौ चित्राणां गवामयं
मित्येव समानार्थत्वानुरोधात् यद्यपि प्रथमांतानामेव बहुव्रीहिरिति शेषो बहुव्रीहिरि
ति सूत्राल्लभ्यते प्रथमांतपक्षे वाक्यं चित्रागावो यस्येत्येवं संभवत्येव षष्ठीति समास
विधानात् राज्ञः पुरुष इति च पक्षे वाक्यम् तथापि तस्य न विग्रहत्वम् भिन्नार्थत्वात्
किं तूक्तस्यैवेति मीमांसकास्तान् प्रसङ्गान्निरस्यति॥

शेषो बहुव्रीहिरित्यधिकारात्प्रथमांतिकस्य द्वितीयाश्रितेत्यादिनानुक्तस्य समासो विधीयते यद्यपि विशेषणं विशेष्येणेत्यादिना तस्यापि समास उक्त एव तथापि नासौ प्रथमाशब्देनोल्लिखित इति तन्त्रिकस्य शेषत्वमविकलमिति भावः उक्तस्यैवेति चित्रा।
णां गवामयमित्यादेरेवेत्यर्थः एवकारेण प्रथमांतचित्रादिपदघटितस्य व्यवच्छेदः॥

शक्तिमत्त्वाविशेषादिति शक्तिमत्त्वमेकार्थीभावः सिद्धांतसिद्धिरिति सिद्धांतस्यमीमांसितार्थस्य सिद्धिरनुष्ठानोपयोगार्हत्वमित्यर्थः तथाहि निषादस्थपतिं याजयेदिति श्रूयते तत्र निषादस्थपतिशब्दः किं षष्ठीतत्पुरुषो बहुव्रीहिर्वोत कर्मधारयइतिसंशये कर्मधारये ऽपूर्वविद्याध्ययनकल्पनागौरवाद्बहुव्रीहौ वाक्यलक्षणायां गौरवाल्लाघवावात् षष्ठीतत्पुरुष एवेति

नन्वस्तु कारीत्या सर्वत्र समासे शक्तिरस्तु च तथा विग्रहस्तथापि षष्ठीतत्पुरुषकर्मधारययोः शक्तिमत्त्वाविशेषान्निषादस्थपतौ त्वधिकरणसिद्धांतसिद्धिर्न स्यादित्यत आह पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते शक्तिग्रहे त्वन्तरंगत्वबहिरंगत्वचिंतनम् ३५ पर्यवस्यंश्चासौ शाब्दबोधश्च तस्माद्विदूरश्चासौ प्राक्क्षणश्च तदानींतनलाघवमादायाधिकरणाविरोध इत्यर्थः अयं भावः॥

पूर्वपक्षे तत्पुरुषस्यापि पूर्वपदलाक्षणिकतया कर्मधारयापेक्षया गौरवाल्लाघवात्कर्मधारय एवापूर्वविद्याध्ययनस्योत्तरकालकल्प्यत्वेन तादृशगौरवस्य फलमुखतयाऽदोषत्वादिति सिद्धांतितम् तद्विरुध्येन भवन्मते तत्पुरुषस्वीकारेपि गौरवानवकाशादिति भावः तदानींतनेति तादृशवाक्यजन्यशाब्दबोधाव्यवहितप्राक्क्षणावृत्तिशक्तिग्रहनिष्ठांतरंगबहिरङ्गभावचिंतनप्रयुक्तलाघवमादायेत्यर्थः तदेव विशदयति अयं भावइति॥ ठं॥

निषादरूपइति स्थपतावित्यनेनान्वितम् निषादानामिति निषादसंबंधिस्थपतावित्यर्थः तत्रपष्ठ्यर्थसंबंधांतर्भावेणैकार्थीभावाभ्युपगमात् निषादस्वामिकइति स्थपतिशब्दस्यसामर्थ्यैकतया निषादभिन्नस्वामिकेपुंसीत्यर्थः तत्रान्यपदार्थांतर्भावेण समुदायशक्तिस्वीकारात् नानार्थइत्यस्यचत्वानेकार्थोपस्थितौ नानार्थतामितिशेषः न्यायेनेत्यस्यचतात्पर्य्यमितिसंदेहे सतितत्कल्पनार्थंतात्पर्यकल्पनायाः पूर्वोपस्थितएवेतिसमासघटकप्रत्येकपदशक्त्युपस्थापितार्थमात्रविषयककर्मधारयीयशक्तिग्रहस्यांतरंगत्वेनप्रथमोप

निषादस्थपतिपदस्यसमासशक्तिपक्षेनिषादरूपेनिषादानांचस्थपतौनिषादस्वामिकेपुरुषांतरेचेत्येवंसर्वत्रशक्त्याम्नानार्थत्वम् तथाचनानार्थेतात्पर्याद्विशेषावगतिरितिन्यायेनतत्कल्पनायांपदद्वयेनपूर्वोपस्थितार्थएवोपस्थित्यादिलाघवात्तत्कल्प्यतइतिपरेषामपिसतितात्पर्येपर्यवसानेऽप्येवंविधन्यायादुर्वारत्वात् तात्पर्यमेवकल्प्यकोटावशिष्यतइतिदिक् ३५ ॥ ८॥ इतिश्रीवैयाकरणभूषणसारे समासशक्तिनिरूपणम् ॥

स्थित्यर्थएवोप

स्थितिर्लाघवान्निषादस्थपतिशब्दस्यतात्पर्यमवसीयतेतेनविशेषावगतिः नतुबहिर्भूतपदार्थविषयकशक्तिग्रहोपस्थापिते तदुपस्थितेर्विलंबितत्वादित्यस्वरसार्थः निरूढलक्षणापेक्षयासामर्थ्यमूलकत्वमभिप्रेतमित्यर्थेइदमपिप्रमाणम् अन्यथाजहत्स्वार्थवृत्तिपक्षेपदानामानर्थक्यात् प्रत्येकपदवृत्त्यार्थोपस्थितेरसंभवेनतन्मूलकशक्तिग्रहइतिनस्यांतरंगत्वकल्प

थनमसंगतमेव स्यादिति बोध्यम् तत् तात्पर्य्यं कल्प्यते अवधार्य्यते ननु संयोगो विप्रयोगश्चेत्यादिना हरिणा संयोगादीनां विशेषाव
गतिहेतुत्वं बोध्यते तत्कथं तात्पर्यस्य विशेषावगतिहेतुत्वमिति चेन्न नानाशक्त्युपस्थितानेकेषु संयोगादनेकस्मिन्नवधारिते तात्पर्य्येण
विशेषावगतिरिति शब्दार्थस्यानवच्छेद इति भावार्थस्य वक्ष्यमाणत्वात्संयोगादीनां तात्पर्य्यग्राहकतायामेवोपयोगेन तात्पर्य्यस्य विशे
षावगतिहेतुत्वं सर्वसंमतमेवेति भावः ननु प्रत्येकपदवृत्तिपक्षेऽनायासेनैवाधिकरणसिद्धांतोपपत्तौ विशिष्टशक्तिपक्षे तादृशसि
द्धांतसमर्थने क्लेशो दुष्परिहर एवेत्यत आह परेषामपीति प्रवेशयेतिवदिति तात्पर्य्यस्यैव लक्षणानियामकतया तत्सत्त्वे वाक्यलक्ष
णया समासांतरबोधस्य दुर्वारतया तात्पर्य्याभावे नैव तदवगतेर्वारणीयत्वादित्यर्थः ननु निषादस्थपतिं याजयेदित्यत्र स्थपतिशब्
दः स्वामिपर्य्यायः श्रेष्ठपर्यायो वा उभयथाप्यसौ गुणवचनः तस्य च जातिवचननिषादपदेन कर्मधारये तत्र गुणवचनस्यैव पूर्वनि
पातनियमेन स्थपतिनिषादमिति प्रसज्येत न तु निषादस्थपतिमिति स्यात् किञ्चोभयथापि स्थपतिशब्दार्थस्य नित्यसंबंधिसापे
क्षत्वेन षष्ठीसमास एव न्याय्यो न तु कर्मधारय इति कथमुक्तसिद्धांतसंगतिः प्रकृतेपीत्यत आह दिगिति तदर्थस्त्वत एवास्वरसाल्लिं
गदर्शनाच्चेति सूत्रं हेत्वंतरोपसंग्राहकं प्रणीतं महर्षिणा तच्च शबरस्वामिना कूटं हि निषादानामेवोपकारकं तार्थोसंगमनमेवं च त
न्निषादानामेव स्वमिति भाष्ये व्याख्यातं तथा च कूटदक्षिणालिंगात्कर्मधारयत्वे निर्णीते स्थपतिशब्दस्य राजदंतादित्वात्परनिपा
तो बोध्यः संबंधाकांक्षानिवृत्तिरप्यर्थतो निषादानां स्वत्वलाभादुपपद्यते एवं लाघवादिविचारस्तु कथंचित्संभवमात्रेणेति सर्वमन
वद्यम् इति भूषणसारदर्पणे समासशक्तिनिरूपणम् ॥

कल्प्यते सा च गंगापदशक्यसामीप्यरूपेव तेन रूपेण गृह्यमाणा तीरं स्मारयत्यनुभावयति च शक्यादशक्योपस्थितिस्तु न लक्षणाउप
स्थितिहेतोस्तस्यास्तत्त्वासंभवात् नापि स्वबोध्यसंबंधः समासशक्तिनिरूपणोक्तयुक्तेः नन्वीश्वरेच्छायाः शक्तित्वासंभवात् घटपदस्या
पि पटे शक्तत्वप्रसंगात् घटपदात् पटो बोद्धव्य इतीच्छाया विषयतया पटेपि सत्त्वात् यदि चेश्वरेच्छीयघटपदजन्यबोधविषयत्वप्रका
रतानिरूपितविशेष्यत्वं शक्तिरिति न पटपदेऽतिप्रसंगः तद्विषयत्वेपि तादृशविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वस्य तत्रानभ्यु
पगमादित्युच्यते तदापि गंगापदात्तीरबोधस्यापि जायमानत्वेन तन्मात्रविषयकेश्वरेच्छीयगंगापदजन्यबोधविषयत्वप्रकारतानि
रूपितविशेष्यत्वस्य तीरे सत्त्वाच्छक्त्यैव निर्वाहे कृतं लक्षणयेति चेन्न गंगापदवाच्यत्वव्यवहारस्य तीरादावसत्त्वेन गंगापदजन्यबोध
विषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वसंबंधेनेश्वरेच्छीयगंगादिपदानां प्रवाहादौ शक्तिस्तीरनिष्ठविशेष्यताया अगंगा
दिपदजन्यबोधविषयत्वप्रकारतानिरूपत्वेपि तस्मात्तादृशविषयतात्वेन तादृशप्रकारतानिरूपितत्वमपि तु शुद्धविषयतात्वेनै
वेत्यभ्युपगमान्न तयालक्षणान्यथासिद्धिर्नापि विषयत्वलक्षणसंबंधस्य पदे जन्यजनकभावे च सत्त्वेपि तत्रातिप्रसंगः तत्र लक्ष्योप
स्थितिनियामकः सादृश्यात्मकः संबंधो गौणी तदतिरिक्तस्तु शुद्धलक्षणेति व्यवह्रियते शुद्धाप्युपादानलक्षणभेदेन द्विविधा तत्र स्व
व्यसंसृष्टान्यार्थोपस्थापकत्वमुपादानत्वम् शक्याविषयकलक्ष्यार्थोपस्थितिजनकत्वं लक्षणत्वम् यष्टीः प्रवेशय गंगायां घोष इ
त्यादिके यथायथमुदाहरणे तत्राद्याऽजहत्स्वार्थाऽन्या च जहत्स्वार्थेत्युच्यते तद्भेदांतराणि त्वन्यतोऽवधार्याणीति नैयायिकास्त्वाहुः
मीमांसकास्तूक्तयुक्त्या लाक्षणिकपदस्यवाचकत्वपरिहारेपीश्वरेच्छायाः शक्तित्वम्॥

रत्वास्यैवानभ्युपगमात् नन्विच्छायाईश्वरीयत्वमनुपादेयमेवचाधुनिकसंकेतज्ञानादपिशाब्दबोधोदयेनतादृशसंकेतस्यच-
तेनानिर्वाहः आधुनिकसंकेतत्वेनतात्पर्यस्यापिदृशित्वप्रसंगस्तुन पदार्थोपस्थितिनियामकसंकेतस्यैवशक्तित्वेनतस्यातत्त्वात्
तज्ज्ञानस्यसाक्षादेवशाब्दधीजनकतयापदार्थोपस्थित्यात्मकव्यापारानपेक्षणात् चक्षुषस्यापितार्थएवप्रकरणादिनातदवधारणा
त् आधुनिकसंकेतितडित्यादिपदेष्वाधुनिकसंकेतस्यप्रागवधारितस्यडित्यादिव्यक्तिशाब्दधीजनकपदार्थोपस्थितौनियामक-
त्वेनतद्व्यक्तित्वस्यसौलभ्यादितिचेदेवमपिसंकेतस्यनिश्च तियौगिकतयानदीयोक्तविषयत्वस्याप्यपातरमणीयतयासंबंधि
त्वासंभवेनपदार्थानुपस्थापकत्वानिर्वाहात् तस्मात्पदपदार्थयोर्वाच्यवाचकभाव नियामकः संबंधः पदार्थांतरमेव तच्च-
सोसमवेतोऽभावादावपिसत्त्वात् किंतुवैशिष्ट्याख्येनसंबंधांतरेणवर्त्ततइत्याहुः वाच्यत्वयथानसंभवायितयावक्ष्यत-
इतिवदतादीधितिकृतापितन्मतमेवानुसृतम् तदेतन्नानाम तानिनिराकर्तुमादौतत्स्वरूपप्रदर्शनमित्याशयेनमूलमव-
तारयति तस्या स्वरूपमिति तस्या शक्तेर्निर्विषयायाणतेर्णाकथघयदि विषयोऽतआह चाक्षुषेति तथाचौपचारिकविष
यत्वनविरुद्धमितिभावः चाक्षुषपदंत्वाचादिप्रत्यक्षस्याप्युपलक्षणम् इंद्रियनिष्ठचाक्षुषादिकारणतयामनादित्वं इंद्रियजन्य
पूर्वपूर्वबोधध्वंसकालिकत्वनत्वजन्यतमव्यावर्त्तकत्वात् शब्दनिष्ठबोधकारणतायातुस्वजन्यबोधसमानाकारपूर्वपूर्वबोधध्वं
सवत्त्वम् तद्बोधकारणतात्मर्थबोधकत्वम् ज्ञायमानपदकारणमभिप्रेत्येदम् अन्यथाविषयतायांतादृशहेतुतावच्छेदकतेत्य
र्थोबोध्य ॥

संकेतज्ञानं विनोक्तशक्तिग्रहासंभवे नावश्यापेक्षणीयतयातस्यैवशक्तित्वमस्तु नहेतोरेवेतिन्यायादित्याशंकते नन्विति तस्याशक्तित्वेहेतुः आधुनिकेत्यादि आधुनिके एतत्कालिकसंकेतविशिष्टे तदभावात् निरुक्तानादित्वविशेषणविशिष्टबोधकारणत्वाभावादित्यर्थः विशेष्यसत्त्वेपिप्रकृते विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वेनतदप्रतियोगित्वरूपकारणत्वेनैव प्रकृतेतेनरूपेणतज्ज्ञानेवा

ननु नबोधकारणत्वमनादिभूतंशक्तिः आधुनिकदेवदत्तादिपदेतदभावात् अन्यथापित्रादीनांसंकेतज्ञानेप्यन्वयबोधप्रसंगः लाक्षणिकातिव्याप्तेश्चेतिसंकेतज्ञानमपिहेतुर्वाच्यम् तथाचावश्यकत्वात्सएवशक्तिरस्तुसचाधुनिकेपित्रादेर्गवादावीश्वरस्यचेतिचेत्॥

धकाभावइतिचेदं यदिसंकेतग्रहमंतरेणैवतद्ग्रहोभवेन्नतुतत्संभवतीत्याह अन्यथेति संकेतनिरपेक्षस्यैवतस्यशाब्दबोधहेतुत्वेइत्यर्थः लाक्षणिकेति तत्राप्यनादिभूतबोधजनकत्वव्यवहारादितिभावः आवश्यकत्वादिति अवश्यापेक्षणीयज्ञानविषयत्वादित्यर्थः सएव संकेतएव एवकारेणबोधकत्वव्यवच्छेदः॥

संकेतस्यस्वरूपेण सामान्यतो विशेषरूपेण वा हेतुत्वमभिमतमिति विकल्प्य दूषयति उच्यत इति स्वरूपेणेति स्वस्वपदरूपमितिधुः
त्यन्यासाधारणधर्मेण संकेतत्वेनेत्यर्थः दण्डत्वेन घटे दण्ड इव ज्ञानाविषय एव संकेतत्वेन हेतुरिति यावत् अगृहीतशक्ति
कादिति अज्ञातसंकेतादित्यर्थः अर्थबोधप्रसंगादिति संकेतस्य तत्र विद्यमानत्वादिति भावः सामान्यत इति जनकाजनक
साधारणरूपेणेत्यर्थ संकेतत्वेनेति ईश्वरीयसंकेतत्वादिना विशेषधर्मेणेत्यर्थः तज्ज्ञानशून्यानामिति संकेत ईश्वरीयत्व
विदुषामित्यर्थः बोधोदयेनेति संकेतत्वेन तज्ज्ञानमात्राद्वा घटार्थबोधोदयेनेत्यर्थः यद्यपि संकेतत्वेन संकेतज्ञानकारण

अत्रोच्यते संकेतो न स्वरूपेण हेतुः अगृहीतशक्तिकादर्थबोधप्रसंगात् नापि सामान्यतो ज्ञातः प्रमेयत्वादिना
तज्ज्ञानेपि बोधप्रसंगात् नापि संकेतत्वेन तज्ज्ञानहेतुः गवादिपदेष्वपीश्वरादेः संकेतत्वेन तज्ज्ञानशून्यानां लौ
किकमीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतामेव बोधेन व्यभिचारात्॥ ११

तथापि गवादावीश्वरस्येति तद्व्यालोचनये श्वरीयत्वादेर्निवेशस्तदभिमत इत्यभिप्रेत्य दूषितमिति ध्येयम् लौकिकमीमा
संकानामिति वैदिकानां तेषां कथंचिदीश्वरबोधसंभवादुक्तं लौकिकेति अथवा लौकिकानां व्यावहारिकपदार्थमात्रविषयक
ज्ञानवतां पामराणामिति यावत् मीमांसकानां चेत्यर्थः तत्तदर्थधीजनकग्रहवतामेवेत्येवकारेण निरुक्तसंकेतज्ञानस्य त्वस्य
वच्छेदः स च तज्ज्ञानशून्यानामित्यस्यैवानुवादः एवं शून्यपाठस्सुगमः इदं च शक्तिग्रहरूपकारणप्रदर्शकम्॥ ६ ॥

तज्ज्ञानं संकेतज्ञानं तथाहेतुः ततोपीति अर्थधीजनकतानिरूपितविषयतासंबंधावच्छिन्नावच्छेदकत्वस्यावच्छेदकत्वापेक्षया
र्थधीजनकतात्वेन हेतुतायाश्चौचित्येन वैयाकरणैः सिद्धेरित्यर्थः संकेतज्ञानस्येदं पदमर्थधीजनकतावच्छेदकवदित्याकारक
स्यार्थधीजनकतावच्छेदकत्वावच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वमिति सूचितं लाघवादिति भावः वस्तुतस्तु तन्मते संकेतत्वेनै

नचार्थधीजनकतावच्छेदकत्वेन तज्ज्ञानं हेतुः ततोपि लाघवेनार्थधीजनकतात्वेनैव हेतु
तायामस्मत्पक्षसिद्धेः नचाधुनिकदेवदत्तादौ संकेतज्ञानादेव बोधेनास्य व्यभिचारः तत्रा
पीदं पदमेनमर्थं बोधयत्विती च्छाग्रहे पदे तदर्थबोधकत्वस्यावगाहनेन व्यभिचाराभावात्

वहेतुतेति नोक्तविकल्पावसर इति बोध्यम् संकेतज्ञानादेवेत्येवेनार्थधीजनकत्वग्रहव्युदासः अस्य बोधकत्वग्रहस्य व्यभि
चारः व्यतिरेके तत्रापि संकेतमात्रादर्थबोधस्थलेपीत्यर्थः इच्छाग्रह इति इदं पदं विशेष्यकेतदर्थबोधकत्वप्रकारकेच्छाग्रहे इ
त्यर्थः अवगाहनेनेति विषयीकरणेनेत्यर्थः ज्ञानेच्छादिविषयकज्ञानस्य तद्विषयविषयकत्वनियमादिति भावः॥ ९ ॥

स्वातन्त्र्येति इतरविशेषणत्वेनेत्यर्थः प्रकृते चेच्छांशे विषयितया विशेषणीभूतबोधकत्वस्यैव तज्ज्ञानेन विषयीकरणादिति भावः अन्यथेति पार
तन्त्र्येणापि बोधकताज्ञानस्य शाब्दधीहेतुत्व इत्यर्थः इष्टापत्तिनिरासायाह नेदं तद्धीजनकमितीति अस्माच्छब्दादिति एतच्छब्दजन्येतदा
श्रयकबोधविषयो यमर्थ इत्याकारकवर्तमानग्रह इत्यर्थः पदविशेष्यकार्थधीजनकत्वबोधग्रहे विद्यमाने तदंशेऽर्थधीजनकत्वाव
गाहिनइदं पदमेतदर्थधीजनकत्वेनबुद्धमनेनेति ग्रहस्यासंभवान्नदपहायास्मादित्याकारकबोधग्रहं गृह्णतः एतस्मिंस्तु ननस्य प्रतिबध
काग्राह्याभावानवगाहित्वादिति भावः तद्धस्तापत्तेरिति घटादिशाब्दबोधापत्तेरित्यर्थः उक्तज्ञानस्य विषयकत्वेपि ननेन पदांशेऽर्थबो
धकत्वं विषयीक्रियते येन तस्य शक्तिग्रहत्वं स्यात् किन्तु बोधांशे तत्पदजन्यत्वमर्थांशे तादृशबोधविषयत्वमेव तथा तेन तत्समितिवेद्य
न च स्वातन्त्र्येण बोधकताज्ञानं कारणं वाच्यम् अन्यथा नेदं तद्धीजनकमिति ज्ञानवतोऽस्माच्छब्दादयमर्थो बुद्धोऽनेनेति
ज्ञानतस्तद्बोधापत्तेरिति वाच्यम् नेदं तद्धीजनकमिति ग्रहवतो बाधेन पदे परग्रहं जानतोपि तद्बोधासंभवात्॥
तथा पदांशेऽर्थबोधकत्वमप्यवगाह्यतइति दुर्वचत्वमिति वेद्यत्वे मानाभावात् प्रतिबंधकस्य ग्राह्याभावावगाहितो नेदं तद्धीजनकमिति
ज्ञानस्य जागरूकत्वाच्च न च पदनिष्ठार्थपदजन्यबोधविषयत्वमपि शक्तिर्विनिगमनाविरहादुभयविधज्ञानाच्छाब्दबोधस्य सर्वानु
भवसिद्धत्वाच्च कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशाच्च न परस्परजन्यशाब्दबोधे व्यभिचार एवं च द्वितीयशक्तिग्रहरूपा
त्तस्माच्छाब्दबोधापत्तिः सुकरैवेति वाच्यम् तथा सति नेदमर्थधीजनकमिति ग्राह्याभावानवगाहिनोऽप्रतिबंधकग्रहस्योपन्यासवैय
र्थ्यात् ग्राह्याभावानवगाहित्वस्याप्युभयविधशक्तिप्रत्यन्वयव्यतिरेकाभ्यां प्रतिबंधकत्वोपगमे न तदुपन्यासस्य सार्थक्यसंपादने तूक्तग्रा
नस्यासंभव एवेत्याशयेन दूषयति नेदं तद्धीजनकमिति बाधेन अप्रमाण्यज्ञानानास्कन्दितनिरुक्तनिर्णयात्मकप्रतिबंधकसद्भावेनेत्य

अर्थविशेष्यकपदजन्यबोधवि

अन्यथेति बाधग्रहेपिजायमानस्यरजतंबुद्धमनेनेतिग्रहस्यइदंविशेष्यकरजतप्रकारकग्रहत्वे भ्रांतित्वस्येत्यनेनदोषाभाववत्त्व मपिसूच्यते भ्रांतत्वापत्तेरिति तदभाववतितदवगाहिज्ञानवत्तएवतत्त्वादितिभावः अत्रेदंचिन्त्यम् यत्रेदंपदमेतदर्थंबोधयत्विति सं केतमात्राच्छाब्दबोधस्तत्रबोधकताशक्तिज्ञानस्यहेतुतावादिमतेव्यभिचारोदुरुद्धरएवनचतत्रसंकेतज्ञानमेवबोधकताज्ञानमि त्युक्तमेवेतिवाच्यम् सविषयकज्ञानस्यतद्विषयविषयकत्वेपितद्विशेष्यांशेतत्प्रकारोननतेनविषयीक्रियते घटमहंजानामीत्य-

अन्यथाभ्रांतित्वस्यापिभानात्वापत्तेरिति इदंचार्थधीजनकत्वंपित्रादि
संकेतज्ञानाद्बृह्यते अतस्तज्ज्ञानात्पूर्वंनबोधः ॥ ९ ॥ १० ॥

नुव्यवसायेनज्ञानांशेघटत्वप्रकारकत्वघटविशेष्यकत्वयोरेवविषयीकरणात् अन्यथाभ्रांतस्यभ्रांतत्वापत्तिरनिवार्य्यैवस्यात् अतएवशा ब्दचिंतामणौतात्पर्य्यविषयसंसर्गज्ञानपूर्वकत्वस्यपदपक्षकानुमानेनसिद्धावपिनेतरपदार्थेऽभिमतापरपदार्थसंसर्गसिद्धिस्तादृशसं सर्गज्ञानपूर्वकत्वानुमानेनतत्पदार्थतात्पर्यविषयसंसर्गस्याविषयीकरणादित्यस्वरसात्पदार्थपक्षकानुमानमवतारितं पक्षधरमि श्रैरिति शक्तिग्रहमाह इदंचेति शक्तित्वेनाभ्युपेतंबोधकत्वंचेत्यर्थः पित्रादीत्यादिनाऽप्तपरिग्रहः ॥ ९ ॥ १० ॥

पूर्वोक्तालाक्षणिकोच्छेदापत्तिमिष्टत्वेन परिहरति नापीति शक्तिग्राहकेति शक्येइव शक्तिग्राहकव्यवहारादेर्लक्ष्येपि तुल्यत्वादित्यर्थः ननु श क्यलक्ष्यव्यवहारानुपपत्त्या लक्ष्यव्यावृत्तैव सा वाच्या तथा च लक्ष्योपस्थितये लक्षणाङ्गीकारावश्यकत्वेन कथमुक्तापत्तेरिष्टत्वमत आह कि ञ्चेति शाब्दबोधानङ्गत्वादिति घटादिपदेऽगृहीतशक्तिकस्य प्रत्यक्षाद्युपस्थितघटादेर्घटादिपदाच्छाब्दबोधानुदयादन्वयव्यभिचारेण प्रत्य क्षाद्युपस्थिते शाब्दबोधाजनकत्वादित्यर्थ नन्वेतदापत्त्या तादृशगौरवं सोढव्यमत आह अपिचेति व्यभिचारो व्यतिरेके बोध्यः न मे वोपप दपति शक्तिजन्योपस्थितिमिति अव्यवहितोत्तरत्वेति नच स्वध्वंसाधिकरणक्षणानुत्पत्तिकत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणक्ष

नापि लाक्षणिकोच्छेदापत्तिरिष्टत्वाच्छक्तिग्राहकव्यवहारस्य मुख्यलक्ष्यसाधारण्यात् किंच प्रत्यक्षादिजन्योपस्थितेः शाब्दबो धानङ्गत्वात् शाब्दबोधं प्रति शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च कारणत्वं वाच्यम् तथा च कार्यकारणभावद्वयस्य क ल्पने गौरवं स्यात् अस्माकं पुनः शक्तिजन्योपस्थितित्वेनैव हेतुतेति लाघवम् अपि च लक्षणाङ्गीकारे कार्यकारणभाव स्य प्रत्येकं व्यभिचारः शक्तिजन्योपस्थितिं विनापि लक्षणाजन्योपस्थितितः शाब्दबोधात्॥ ‘‘गौणोत्पत्तिकत्वमप्रसपदं शक्तिज्ञान जन्योपस्थितिपरम् लक्षणाज्ञानजन्यपदार्थोपस्थितिप्रागभावे शक्तिज्ञानजन्यपदार्थोपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय विशे ष्यम् शक्यशाब्दबोधानन्तरभाविलक्षणाज्ञानजन्योपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय सत्यन्तं प्रकृते लक्षणाज्ञानजन्योपस्थि तिजन्यशाब्दबोधे उक्तसंबन्धेन शक्तिज्ञानजोपस्थितिविशिष्टाभावेन तत्कार्यतावच्छेदकाक्रान्तत्वान्न व्यभिचार इति भावः अननैति। स्तत्वसन्न च शक्तिविषयतत्वेनाननुगततया तद्घटिताव्यवहितोत्तरत्वसंबन्धेनोपस्थितिमत्त्वस्य कार्यतावच्छेदककोटौ निवेशे कार्य

न्यायसाम्यादाह किञ्चेति प्राग्वदेवेति शक्तिज्ञानं विनापि लक्षणाज्ञानात्पदार्थोपस्थितेरेवं लक्षणाज्ञानं विनापि शक्तिज्ञानात्पदार्थोपस्थितेस्तयोरुपस्थितिहेतुतायां परस्परं व्यभिचारः अव्यवहितोत्तरत्वसंबंधेन तत्कारणवैशिष्ट्यस्य कार्य्यतावच्छेदककोटौ निवेशे च गौरवं तदेवेत्यर्थः ननु बोधकत्वशक्तिवादिनोपि गंगापदं प्रवाहबोधकमिति शक्तिग्रहाल्लक्ष्यार्थोपस्थितिशाब्दबोधयोरापत्तिवारणाय कारणताव

नचाव्यवहितोत्तरत्वसम्बन्धेन तत्तदुपस्थितिमत्त्वं कार्य्यतावच्छेदकं तत्तदुपस्थितित्वञ्च कारणतावच्छेदकम् अनन्तकार्य्यकारणभावप्रसङ्गात् किंच पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुतेति व्यभिचाराद्गौरवं च प्राग्वदेव बोध्यम् नचेदं पदमेतदर्थबोधकमिति शक्तिज्ञानेन कार्यकारणभावकल्पनेपि पदतदर्थभेदेनानेककार्यकारणभावकल्पने गौरवं तवापि समम् परस्परव्यभिचारवारणाय अव्यवहितोत्तरत्वघटितत्वे च सुतराम् इति वाच्यम् शक्तिभ्रमानुरोधेन तत्तत्पदतत्तदर्थभेदेन कार्यकारणभावानंत्यस्य तवापि साम्यात् लक्षणाकार्यकारणभावकल्पनागौरवं परं तवातिरिच्यते॥ च्छेदककुक्षौ तत्तदर्थनिवेश आवश्यकस्तथाच लक्षणावादिमते गौरवमित्याशंक्य निराचष्टे नचेति परस्परेति गंगापदनिष्ठतीरबोधकत्वग्रहं विनापि तीरादिपदनिष्ठतादृशशक्तिग्रहेण तीरबोधात्तयोः परस्परजन्यबोधे व्यभिचारप्रतिरोधायेत्यर्थः शक्तिभ्रमानुरोधेनेति गंगापदस्य तीरे शक्तिभ्रमदशायां तीरोपस्थित्यादेः सर्वमतसिद्धतया तवापि तत् कारणतावच्छेदकोटौ तत्तत्पदतत्तदर्थनिवेशस्यावश्यकत्वादित्यर्थः नवेति लक्षणास्वीकर्त्तुरित्यर्थः ॥८॥

शक्तिज्ञानकारणतायां शक्तेः शक्तित्वेन निवेशे स्यादेवोक्तदोष किंतु वृत्तित्वेनेति न तत्स्वभाववेत्याशंकते अथेति धात्वमितीति शक्ति
स्थितावविलक्षणाजन्योपस्थितावपि शक्तिलक्षणासाधारणवृत्तित्वावच्छिन्नजन्यत्वसत्त्वादिति भावः शक्तिलक्षणेति शक्तिभिन्नत्वेष
तिलक्षणाभिन्नपदाद्भिन्नत्वस्येत्यर्थः शाब्दबोधानुकूलेत्यादि शाब्दबोधजनिका या पदार्थोपस्थितिः पदवृत्तिज्ञानजन्योपस्थितिस्तदु
कूलेत्यर्थः कारणतावच्छेदकत्वे उभयसाधारणदूषणमाह गुरुत्वाविति असदभिमतशक्तित्वमपेक्ष्य निरूढान्यतरत्वादेर्गुरुत्वादि
त्यर्थः द्वितीयदूषणान्तरमप्याह शाब्दबोधहेत्विति शाब्दबोधानुकूलत्वस्य तदात्मकत्वस्य कारणतावच्छेदकोपस्थित्यधीनत्वेन तस्य च

अथवृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुता वृत्तिज्ञानत्वेन च पदार्थोपस्थितेश्च कारणतेत्येव च मया व्याख्यातमिति चेन्न
शक्तिलक्षणान्यतरत्वस्य शाब्दबोधहेतुपदपदार्थोपस्थित्यनुकूलपदपदार्थसंबंधत्वस्य चानुगतत्वस्य कारणतानवच्छे
दकत्वात् शक्तित्वमपेक्ष्य गौरवात् शाब्दबोधहेतुतावच्छेदकस्य पदार्थोपस्थितिर्नेतरज्ञाने तद्घटितकार्यकारणभावग्रह

पदवृत्तिज्ञानजन्योपस्थितित्वात्मकतया न ज्ञानस्य स्वघटकवृत्तित्वज्ञानविनाऽसंभवेन कार्यकारणभाव एव दुर्घट इ॥ स्याप्यसंभवात्
स्यर्थं तथावृत्तित्वग्रहे शाब्दबोधपदार्थोपस्थित्योः कार्यकारणभावग्रहस्तद्ग्रहे च निरुक्तपदपदार्थसंबंधत्वरूपशक्तित्वग्रह इत्यस्यो
न्याश्रयेणोक्तस्य वृत्तित्वासंभव इति भाव वस्तुतस्तु विजातीयपदार्थोपस्थितिजनकपदपदार्थयोः संबंधः शक्तिर्वैजात्यस्य निवेशासंभवा
काशोपस्थितिजनकसमवायादावतिव्याप्तिः तादृशवैजात्यपरिचायकत्वं शाब्दबोधानुकूलेत्यनेन रूपेणोपस्थितेर्निवेश इत्यवधेयमिति मल ॥

ममापीति लक्षणांगीकर्त्तुरपीत्यर्थः प्रवेशादिति तथाचलक्षणाज्ञानस्यापिशक्तिज्ञानत्वेन हेतुत्वेनलक्षणाज्ञानजन्यलक्ष्यार्थोपस्थित्यादौ शक्तिज्ञानस्यहेतुतायांव्यभिचारइत्यर्थः विषयमनिवेश्यैवयदि शक्तिज्ञानपदार्थोपस्थित्योः कार्य्यकारणभावः संभवेत्तदास्यादस्तु क्तप्रकारः सएवनसंभवतीत्याह शक्तिज्ञानेति आवश्यकत्वादिति तदर्थविषयकोपस्थितिंप्रतितदर्थनिरूपिततत्पदनिष्ठशक्तिज्ञानत्वेनहेतुतायाआवश्यकत्पत्वादित्यर्थः आवश्यकत्वमेवाह अन्यथेति शक्तिज्ञानपदार्थोपस्थित्योः कार्य्यकारणभावेसमानविषय

अथममापिशक्तिज्ञानत्वेनैवहेतुताशक्यसंबंधज्ञानरूपलक्षणायांशक्तेरपिप्रवेशादितिचेन्नशक्तिज्ञानपदार्थोपस्थित्योः कार्य्यकारणभावेसमानविषयत्वस्यावश्यकत्वात् अन्यथागङ्गातीरयोः सम्बन्धाग्रहवतोगंगापदशक्तिज्ञानतोऽपिगंगायांघोषइतिवाक्यात्तीरबोधप्रसङ्गः शक्तिज्ञानस्यहेतोः सत्त्वात् अपिचघटमानयेति वाक्यंहस्तिकंचस्मरतोघटपदादिभ्योघटादेः गजादुस्तिपकस्यचसमूहालम्बनस्मरणवतोघटानयनवद्धस्तिपकस्यापिशाब्दबोधापत्तिः समूहालम्बनरूपायाम्पदार्थोपस्थितौपदवृत्तिजन्यत्वसत्त्वात्॥ ११ त्वानिवेशेइत्यर्थः संबंधाग्रहवतः इत्युक्त्यालक्षणाज्ञानासत्त्वंबोधितम् गंगापदइति प्रवाहरूपार्थनिरूपितबोधकत्वशक्तिंगंगापदेजानतइत्यर्थः तीरबोधप्रसंगइति तीरोपस्थितेस्तद्द्वारकशाब्दबोधस्यचापत्तिरित्यर्थः नतूक्तापत्तिवारणायवृत्तिज्ञानजन्योपस्थितिशाब्दबोधयोरेवकार्य्यकारणभावेसमानविषयकत्वंनिवेश्यतांकृतंवृत्तिज्ञानपदार्थोपस्थित्योः कार्य्यकारणभावेनतन्निवेशेनेत्यतआह अपिचेति हस्तिपकस्मृतेर्वृत्तिज्ञानजन्यत्वसंपत्तयेहस्तिनोपिवाक्यादस्मृतिविषयतादर्शितासमूहालंबनेत्यत्रालंबनपदंविषयपरम्॥ ९ ॥ ९ ॥

निज्ञानस्य हेतुतेति निर्विवादम् सा च भवदुक्तार्थधीजनकत्वस्य वृत्तित्वेन संभवति तद्रूपायास्तस्याः शाब्दधीजनकतायामनवच्छेदकत्वात् आत्माश्रयेण स्वस्यैव स्वावच्छेदकत्वासंभवात् किञ्च प्रयोज्यप्रयोजकव्यवहारदृशा प्रयोज्यप्रवृत्त्यनुमिते प्रयोज्यघटानयनादिज्ञाने उपस्थितत्वाच्छाब्दस्यैव हेतुतायामवधार्य्यमाणायामसंबद्धस्य कारणत्वानुपपत्त्या कल्प्यमानसंबंधस्य जनकत्वात्मकत्वासंभवः स्वयमनुपपद्यमानत्वेन गृहीतस्य गृहीतुमशक्यत्वात् तस्मात् बोधकत्वं शक्तिः एवं न्यायमतानुपेतास्मात्पदादेतदर्थविशेष्यकबोधो भवत्वित्याकारकेश्वरेच्छा विषयत्वस्यापि सांकेतीयगंगापदजन्यत्वप्रकारतानिरूपितबोधत्वावच्छिन्नोद्देश्यतानिरूपितविशेष्यत्ववृत्त्यवच्छेदकताधेयतासंबंधावच्छिन्नावच्छेदकत्वपर्य्यवसितस्य न शक्तित्वं लक्षणोच्छेदापत्तेः पदात्तीरबोधो भवत्वितीच्छाया अपि भगवतः संभवात् तादृशेच्छीयनिरुक्तावच्छेदकतायां लक्ष्ये तीरेपि संभवात् तादृशावच्छेदकतात्वेन शाब्दे शक्तिज्ञानस्य कारणताकल्पने गौरवाच्च तीरादिनिष्ठावच्छेदकतायाः पूर्वोक्तविशेष्यत्ववृत्त्यवच्छेदकतानिरूपितत्वेपि न विशेष्यवृत्त्यवच्छेदकतात्वेन तन्निरूप्यत्वम् किंतु शुद्धावच्छेदकतामात्रेणेति न तादृशशक्तिस्तीरे इति शिष्यप्रतारणामात्रम् इच्छाविषयत्वं ज्ञानविषयत्वं वा शक्तिरिति विनिगमनाविरहाच्च तस्मात्पदपदार्थयोर्वाच्यवाचकभावव्यवहारनियामकः संबंधः पदार्थान्तरमेव तस्य च लक्षणं व्यावृत्तस्यैव धर्मिग्राहकमानसिद्धत्वाल्लक्ष्यबोधार्थं शक्यसंबंधरूपलक्षणावृत्तेरपि स्वीकार आवश्यकः तज्ज्ञानस्य शाब्दबोधे हेतुत्वांतरकल्पनप्रयुक्तगौरवं तु फलमुखत्वान्न दोषावहम् अन्यथानुपपत्तेश्च अत एव शक्यलक्ष्यव्यवहारः स्वरसतः संगच्छते अथवा शक्तिलक्षणाज्ञानयोः शाब्दरूपं प्रत्येकरूपेणैव हेतुता तथाहि तच्छाब्दं प्रति शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपिततदर्थविशेष्यताकज्ञानत्वेन हेतुता शक्तिसंबंधेन शक्यसंबंधेन वा पदप्रकारकज्ञाने शक्तेः संसर्ग

त्वात् शक्तित्वनिष्ठावच्छेदकतायांपर्य्याप्तेरनिवेशेनशक्यसंबंधसंसर्गकज्ञानस्यापितेनक्रोडीकरणात् परंतु पदनिष्ठप्रकारतानि
रूपितताद्दससांसर्गिकविषयतायामर्थविशेष्यतानिरूपितत्वानभ्युपगमान्नशक्तिसंबंधेनपदाभावप्रकारकबुद्धिप्रतिबध्यत्वंलक्ष
णाज्ञानस्येंद्रियाणामित्यादिहरिपद्यस्यत्वयमर्थः इन्द्रियाणांचाक्षुषादिविषयेषुघटादिषुपुरुषप्रयत्नानपेक्षायथायोग्यतानदी
यचाक्षुषादिकारणतावच्छेदकरूपाणि तथार्थैः साकमपिपदानांसंबंधोयोग्यतातच्छाब्दबोधजनकतावच्छेदकधर्मोनतुजनक
त्वमेवोक्तयुक्तेरितिनतद्विरोधोपीतिसर्वमनवद्यमिति तद्ग्राहकंचव्याकरणस्मृत्यादि तदुक्तं शक्तिग्रहंव्याकरणोपमानकोशाप्त
वाक्याद्व्यवहारतश्च वाक्यस्यशेषाद्विवृतेर्वदंतिसान्निध्यतः सिद्धपदस्यवृद्धा इति तत्रव्याकरणादिकंलाघवसहकृतमेवश
क्तिग्राहकमितिनैयायिकमतम् यतोलाघवसहकृतेनल कर्मणीतिसूत्रेणकृतावेवशक्तिः परिच्छिद्यतेनतुकर्तरीति यथेनमत्ता
थोक्तम् एवंगुणेशुक्लादयइतिकोशेनापिलाघवसहकृतेनगुणएवशक्तिर्निर्द्धार्य्यतेनतुगुणिनिगौरवात् गुणिबोधस्तुशुक्लादिप
देभ्योनिरूढलक्षणयैवेतिचतदुक्तं निरूढत्वंचप्राक् निरुक्तं उपमानस्यतुसादृश्यज्ञानात्मकस्यातिदेशवाक्यार्थस्यस्मरणगव
यादिर्गवयादिपदवाच्यइतिशक्तिपरिच्छेदकत्वम् इदमेतद्वाचकमित्याकारकाप्तवाक्यादपितद्ग्रहः आप्तत्वंचतदर्थविषयक
यथार्थज्ञानवत्त्वम् व्यवहाराद्यथा प्रयोजकवृद्धेनघटमानयेत्युक्तेप्रयोज्यवृद्धेनानीतेघटेपार्श्वस्थोघटकर्मकानयनादिकार्यं
घटकर्मकानयनादिज्ञानसाध्यमित्यनुमिनोतिव्यवहारेव्यवहर्तव्यज्ञानस्यहेतुत्वात् अनंतरंतद्धेतुजिज्ञासायामुपस्थितेतद्वा
क्यमेवतद्धेतुत्वेनावधारयति तस्यचार्थासत्वदृस्य तद्धेतुत्वानुपपत्त्यार्थेनसाकंपश्चाद्वाक्यसंबंधमवधारयतीतिशक्तिरि
तिव्यवह्रियते यद्यपिप्रथमंतेनवाक्यस्यैववाक्यार्थेऽवधारितःसः तथापिघटनयगामानयेत्यावापोद्वापाभ्यांपश्चात्तत्प्रत्ये

कपदशक्तिग्रहेण प्राग्जातवाक्यशक्तिग्रहे चंद्रादेर्ज्योतिः शास्त्राध्ययनजन्यशतयोजनादिपरिमाणग्रहेण पाश्चात्येन प्राथमिकाल्पपरि
माणग्रहस्येवाप्रामाण्यं गृह्यत इति नैयायिकाः प्रत्येकपदशक्तिग्रहेणैवाकांक्षादिसहकृतेन वाक्यार्थबोधोपपत्तेरिति तदाशयः अन्ये तु
वाक्यार्थशक्तिग्रहस्य प्रत्येकपदशक्त्युपजीव्यत्वात्तेनैतद्बाधासंभवेन प्राग्जातशक्तिग्रहस्यैव बलवत्त्वमित्याहुः वाक्यशेषात्तु यवैर्जुहो
तीत्यत्र यवपदस्य दीर्घशूकविशिष्टे आर्याणां प्रयोगात् कंगौ म्लेच्छानां प्रयोगात्कशक्तिरिति संदेहे यत्रान्या ओषधयो म्लायंते अथैते
मोदमाना इवोत्तिष्ठंतीति वाक्यशेषेण दीर्घशूकविशिष्टे तन्निर्णयः विवरणस्य यथा शक्तिग्राहकत्वम् तथा धात्वर्थनिरूपण उक्त
म् इह सहकारतरौ मधुरं पिको रौती त्यादौ प्रसिद्धसहकारादिपदसन्निधानात्पिकादिपदानां कोकिलादौ शक्तिपरिच्छित्तिरि
ति सैषा शक्तिर्नानार्थेषु संयोगादिना नियम्यते तदुक्तं काव्यप्रकाशे संयोगो विप्रयोगश्च साहचर्यं विरोधिता अर्थः प्रकरणं लिंगं
शब्दस्यान्यस्य सन्निधिः सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः शब्दर्थस्यानवच्छेदे विशेषस्मृतिहेतव इति शब्दार्थस्यान
वच्छेदे संदेहे तन्निरासद्वारा विशेषनिर्णयस्य जनकाः संयोगादय इति तदर्थः शक्योपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनि
र्णयद्वारा तत्तदर्थबोधजनकत्वं तेषामिति भावः तत्र सवत्सा धेनुरवत्सा धेनुरिति क्रमेण संयोगविप्रयोगयोरुदाहरणे साहचर्यं सा
दृश्यम् सदृशयोरेव प्रायशः सहप्रयोगादेवं च रामलक्ष्मणावित्यादावुभयोर्नानार्थयोर्युगपदेव साहचर्यग्रहाधीनतात्पर्यग्र
हेण विशिष्यावगतिरिति नान्योन्याश्रयः रामार्जुनगतिस्तयोरित्यादौ विरोधेन सा अञ्जलिना जुहोत्यंजलिनादित्यमुपतिष्ठत इ
त्यादौ धात्वर्थवशात्तदाकारांजलिपरत्वम् सैन्धवमानयेत्यादौ तु भोजनादिरूपप्रकरणेन सा अत्रक्ताः ॥ ॥

गर्हितअपद धातीत्यादौ तेजोवैरत्नमित्यादिश्रुतिरूपाल्लिङ्गादेकपदस्य हृतसाधनाजनेनात्पर्यावगतिः रामो जामदग्न्य इत्यादौ जामदग्न्य
ग्न्यपदसन्निधानेन रामपदस्य परशुरामपरता एवमभिरूपायकन्यादेयेत्यत्राभिरूपतरायेति सामर्थ्यादवगम्यते पञ्चनिंब परशुनेत्यत्रौ
चित्यात परशुपदस्य छेदनार्थत्वात् भात्यत्र परमेश्वर इत्यत्र राजधानीरूपदेशात् परमेश्वर पदस्य राजपरत्वम् चित्रभानुर्भातीत्यत्र
चित्रभानुपदस्य रात्रौ वह्निर्दिवा सूर्य्यस्य बोधकम् मित्रं भाति मित्रो भातीत्यादौ व्यक्तेर्लिंगाद्यासु हृदोऽन्यै सूर्य्यस्य बोधकम् मित्रपद
म् स्थूलपृषतीमनड्वाहीमित्यत्र स्वराज्जुरुपबहुव्रीह्यर्थनिर्णयः आदिपदात् लक्षणत्वादि यथा सुसिक्तमित्यत्र सुशब्दस्य कर्मप्रव
चनीयस्य पूजार्थकत्वम् सुपिक्तमित्यत्रोपसर्गस्यान्यायार्थकत्वमेवं प्रणायक इत्यत्र णत्वात्प्रणयनकर्तृबोधः प्रनायक इत्यत्र त
दभावात्प्रगतनायकबोध इत्याद्यूह्यम् यत्तु पदपदार्थयोर्योऽर्थः स शब्दो यः शब्दः सोऽर्थ इतीतरेतराध्यासमूलकतादात्म्यं भेदव्याप्
क्तमस्ति तस्य वाचकः प्रणवादि ओमित्येकाक्षरं ब्रह्मेति भेदाभेदयोर्दर्शनात् अभेदे भेदस्योद्भूतत्वविवक्षया षष्ठी अभेदस्योद्भूतत्ववि
वक्षया तत्त्वेऽभातिपदिकार्थे प्रथमा स एव सम्बन्धः पदतदर्थयोर्वाच्यवाचकभावव्यवहारनियामकः शक्तिस्तु संकेतः पदार्थमर।
वेति भट्टानुयायिमतं तत्तु न साधीयः अध्यासमूलकस्य सत्तस्य सम्बन्धत्वासंभवात् भेदाभेदयोः परस्पराभावरूपतया विरुद्ध
त्वेनैकत्रासंभवाच्च कस्यचित्तथाध्याससंभवेऽपि सर्वेषां तथाध्यासे मानाभावात् घटपटनाशेऽपि घटस्योपलभ्यमानतया तयोस्ता
दात्म्यस्यासंभवाच्च किंचित्त्वाच्च न च पाकरक्ते श्यामेऽपि पाकोत्तरमयमिदानीं नश्याम इति प्रतीतेर्भेदाभेदौ न विरुद्धाविति वाच्य
म् अत्रापि परमीनोतेषामेकावच्छेदेन विरोधानपायात् अत एव तत्र देशकालावच्छेदकभेदे नैवायमि॥ ५ ॥ ९ ॥

किंत्वभेदवादे घटपद
दानींनश्यामोवृक्षोमूलेनकपिसंयोगीति नतुनदनवगाहिनी घटोयंनश्यामोवृक्षोनकपिसंयोगीति प्रतीतिः शब्द
नाशेघटनाशापत्तिरेवशब्दवदर्थस्यापिश्रोत्रेंद्रियग्राह्यतायाः शब्दस्यचक्षुरादींद्रियग्राह्यतायाश्चापत्तिरितिबहुव्याकोपः
स्ययथाननित्यत्वंतथावक्ष्यते तच्चात्यंतभेदे घटः पटोत्यंताभेदे घटोघटइति सामानाधिकरण्यादर्शनाद्भेदाभेदवादोपपत्तिरिति
शंक्यम् शब्दोघटइत्याद्यननुभवाद घटोनशब्दो घटोनघटइत्याद्यनुभवाच्चभेदस्यैवसिद्धेः ओमित्येकाक्षरमित्यादौत्वक्षर
पदस्यतत्प्रतिपाद्येनिरूढलक्षणायाः सामानाधिकरण्योपपत्तेस्तद्वाक्यस्योपासनाकांडस्यतयाभेदेप्यभेदोपासनपरतयोपप
पत्तेश्चेत्यन्यत्रविस्तरः साचशक्तिस्त्रिधायोगोरूढिर्योगरूढिश्चेति प्रकृतिप्रत्ययनिरूपितातत्तदर्थेयाशक्तिः संयोगः तन्मात्रेणार्
र्थबोधकंपदंयौगिकमितिव्यवह्रियते यथापाचकादिपदम् तद्घटकधातुप्रत्यययोः पाकादौकर्त्रादिकारकेचव्युत्पन्नत्वात् अ
वयवार्थाप्रतीतौकेवलसमुदायस्यतत्तदर्थेयाशक्तिः सारूढिस्तयार्थबोधकंपदंरूढम् यथामणिनूपुरादि अश्वगंधादिपदा
नुकदाचिदोषधिनिष्ठसमुदायनिरूपितशक्त्यौषधिबोधः कदाचित्तुअश्वस्यगंधोस्यामितिव्युत्पत्त्यावाजिशालादिबोधोवयव
शक्त्येतियौगिकरूढिः पृथङ्नोक्तोक्तयोरेवांतर्भावात् रूढिर्योगापहारिणीतितुप्रकरणाद्यभावेलाक्षणिकंतद्वाजिशालाद्यर्थ
परेयत्रावयवार्थसहकृतासमुदायशक्तिरर्थबोधिकासायोगरूढिस्तयार्थबोधकंपदंयोगरूढम् यथापंकजादिपदम् तत्र
पंकाधिकरणकोत्पत्त्याश्रयपद्मत्वविशिष्टबोधात् अनुपपत्तिप्रतिसंधानंविनापिपद्मबोधान्नतत्रलक्षणावसरइत्यादिप्रपंचि
तंपूर्वमेव गंगायांघोषइत्यादौगंगापदस्यतीरेशक्यसामीप्यरूपलक्षणाग्रहेतदाहितसंस्कारजन्यतीरादिस्मृत्यातीराधिकर।

णकबोधशाब्दबुद्धिः लक्ष्यव्यवहारान्यथानुपपत्त्या लक्षणायाश्च व्यवस्थाभ्युपेयत्वात् अन्यथानुपपत्तिप्रतिसंधानं च तत्कल्पने बी
जं यथोक्तेकेचिन्निरोक्तास्त्वमपि तद्बीजं यथा वदनं तस्य वदनं सुखमसुखं भाति चान्यासामित्यत्र तादात्म्यसंबन्धावच्छिन्नवदन
त्वावच्छिन्नप्रकारतानिरूपितवदनत्वावच्छिन्नविशेष्यताको बोधो न संभवति तादात्म्यसंबन्धावच्छिन्नतादृशतादृशप्रकारता
निरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबुद्धौ विधेयतावच्छेदकभेदस्य तन्त्रत्वादिति वदनत्वावच्छिन्नार्थकवदनपदनि
रूपिताकांक्षानवदनपदेन तत्समवदनपदं लक्षणया ह्लादकपरं तदुपस्थितह्लादकत्वावच्छिन्नस्याभेदान्वयो वदने अनुशासनं
बोधितनैराकांक्ष्यमपि युचितया यथा कृतसीतापरित्यागः रत्नाकरमेखलाम् बुभुजे पृथिवीपालः पृथिवीमेकमेव तामित्यत्र भुजि
धातोरेव नवाचकादात्मनेपदनिराकांक्षतया अर्थबुद्धौ मति क्रियार्थकतातु नास्तार्थपालनसवधि शासनम् लक्ष्यते आत्मने
पदसमभिव्याहृतभुजित्वावच्छेदेनास्मात् बोधकत्वेऽपि पालनबोधस्वरूपायोग्यत्वरूपनैराकांक्ष्यस्य भुजोऽनवन इति सूत्रे
णबोधनात् तत्र केवलपदेन तात्कालिकरामाभिन्नपृथिवीपालकर्तृकभोगकर्मनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकैकत्व
योगिनी व्यक्तिरभिधीयते एवकारेण पृथिव्यन्ययोगव्यवच्छेदः एवं च तात्कालिकरामाभिन्नपृथिवीपालकर्तृकभोगकर्मनि
न्योन्याभावप्रतियोगितानवच्छेदकैकत्वविशिष्टाभिन्नपृथिवीकर्मकभोगकर्त्ता पृथिव्यन्यलोककर्मकभोगकर्तृरामाभिन्नः पृ
थिवीपाल इति नयपन्थेषा वाक्यार्थबोधः हरिरेषः मधुरं रौति हिक्का कूजति काननदृत्यादौ तु मुख्यार्थबाध एव लक्षणाबीजम् किं
तु सासलितलक्षणेत्युच्यते लक्ष्यसमासार्थरेपदद्वयविशिष्टघटितत्वात्तस्याः यथा हियेन प्रहरेण हरिरेषादिपदसमाप्तिविशि

षेशक्तिर्न गृहीता किंतु द्विरेफोयत्रेति व्युत्पत्त्या रेफद्वयसंबंधिभ्रमरपदे शक्यसंबंधरूपलक्षणा गृहीता तस्य प्राणिविशेषविशेष्यकमधुप
वकर्तृत्वशाब्दबोधस्य तात्पर्यविषयस्यानुपपत्त्या द्विरेफपदात्स्वलक्ष्यरेफद्वयघटितपदवाच्यत्वलक्षणयोपस्थिते प्राणिविशेषे मधु
पावकर्तृत्वान्वय इति द्विरेफपदेन भ्रमरपदमुपस्थाप्य तेन च प्राणिविशेषोपस्थितिरिति तु न सम्यक् प्रत्ययानामिति व्युत्पत्तेस्त
त्रप्रत्ययार्थान्वयासंभवात् भ्रमरपदे लक्षणायामपि न तेन तदुपस्थितिः रूढत्वात्स्वैवार्थप्रत्यायकत्वादित्यप्याहुः एवं द्विकः कूजतिका
ननेइत्यादावपि बोध्यम् एवं गंगाहरति वै पुंसां दृष्टा पीताऽवगाहिता इत्यत्र पीता गंगा पापं हरतीति वाक्ये गंगापदात्स्वशक्यप्रवाहावयवा
वयविभावसंबंधरूपलक्षणाग्राहितसंस्कारसहकृतादुपस्थितोद्भूतजले पानकर्मत्वान्वयः तात्पर्यानुपपत्तिरेव वा सर्वत्र लक्षणा
बीजम् तदुन्नायकत्वेनैवोक्तनैराकांक्षादीनामुपयोगः अत एव यष्टीः प्रवेशय इत्यादौ यष्ट्यादिपदानां तद्धारणकर्तरि लक्षणा यष्टि
षु प्रवेशकर्मत्वान्वयानुपपत्त्यभावेपि भोजनादिप्रकरणोन्नीततात्पर्यविषयभोजनप्रयोजनकप्रवेशकर्मत्वानुपपत्तेस्तत्र जागरूकत्वात् एवं कु
ताः प्रविशंति छत्रिणो यांतीत्यादावप्यूह्यम् ननु छत्रिशब्दस्य पदद्वयघटितत्वेन वाक्यतया स्यापनये कथं तस्य लक्षणाशक्याप्रसिद्धेः किं
चात्र नैकमार्थगंतृत्वं लक्ष्यतावच्छेदकम् यांतीत्यस्यानन्वयापत्तेः गंतृत्वेनोपस्थितस्य गमनाकांक्षाविरहादिति चेत्सत्यम् संबंधिश
क्मतु पएव तत्रैकसार्थसंबंधिलक्ष्यकत्वाभ्युपगमेनोक्तदोषद्वयस्याप्रसक्तेः न च छत्रपदवैयर्थ्यं तस्य तात्पर्यग्राहकत्वेन सार्थ
क्यात् लाक्षणिकपदं नानुभावकमिति संप्रदायः स्वशक्यानुभवं प्रत्येव पदानां कारणत्वम् इतरपदार्थेन सह स्वशक्यानुभावक
त्वेन अशक्याद् घोषादिपदादेव तीरानुभवो ॥

९६.१

पपत्तेर्न शक्याद्शक्योपस्थितिर्लक्षणेत्यभ्युपगन्तव्यमन्यथा मते त्वजन्योपस्थितिर्संबंधेनैव पदस्यानुभावकतया तस्याश्चतीरादावभावात्तस्या
ननुभावकत्वमितितन्मूलं न चतत्संभवति शक्योपस्थितानीरादेरप्रकृतत्वर्थतया तत्र प्रकृत्यार्थान्वयासंभवात् वस्तुतस्तु लाक्षणिकः
पदमुद्देश्यविधेयभावेनान्वयाजनकमित्येवतदर्थः उद्देश्यविधेयभावेनान्वये शक्तिमत्त्वस्यैव तंत्रत्वात् अतएव न विधेयपरः श
ब्दार्थ इति सङ्गच्छते किंच तनुसंयोगहेतुत्वतात्पर्य्यकं तंतुः पटं जनयतीति सर्वलाक्षणिकवाक्येऽन्वयानुभवापत्त्यापादने ~ ~
~~~~~~~~~~~~~~ लाक्षणिकपदस्यानुभावकत्वमेवमन्याय्य गंगापदात्तीरमनुभवामीति प्रतीतेश्चतादृशप्रवादेनाभि
निवेष्टव्यम् ननु स्वायत्ते शब्दप्रयोगे किमित्यवाचकं पदं प्रयोक्ष्यामहे इति न्यायात्तीराद्यसाचकगंगादिपदाभिधानमनुचितम् प्रयोजन
वाचकानामिपदत्वावारिवाहेः सहानिशं तिष्ठतिचपललयत्रसकलाः समुपागताइत्यमाशङ्क्याना श्रियमपहृत्यपुंस्त्वस्त्रीजलवाहकैः
साकमरमतइत्यतात्पर्य्यविषयं रूढ्यर्थानालिंगितार्थान्तरस्यापिप्रतीतिः साचार्थद्वारिकापिभ्रमधर्मिकविभ्रमवसोयस्वमीरितस्ते
नगोदातीरनिकुंजप्रतिष्ठितनिसर्गादमिसिद्धेनेत्यादौप्रतिभाजुषासहृदयानांचरूपोपव्यवेशिष्ट्यस्फूर्त्तीसिद्धप्रतीत्यननरं गोदातीरे
ष्वभीरुभ्रमणीयोग्यत्वप्रत्ययादितिचेन्नरूढ्यर्थानालिंगितार्थसम्बन्धसंयोगेन प्रतीत्यसंभवेपिलक्षणयातस्या रूपपादत्वात् पावन
त्वादिप्रतीतिविशिष्टलक्षणयापिशुद्धलक्षणयेवानुपपत्तिपरिहारेविशिष्टेनदभ्युपगमेबीजाभावइतितुनः पक्षीः प्रवेशायेत्यत्रापित
दनापत्तेः काव्यार्थंवैयञ्जनिकमुद्दे रतुमानेनापिगतार्थत्वान्न वस्तुतस्तु गालिप्रदानादेरिवेतोपितथातात्पर्य्यमेवोन्नीयते नत्वन्वयबो
धोनुमितिर्वाबाधव्यभिचारपक्षधर्मतयोः संदेहेवातयोरसंभवान्नभवतेव्यंजनो आसाभ्युपगमात् इत्यन्यत्रविस्तरः ॥ ९ ॥
~~~~~~~~~~~~~~

यदिप्रकरणानुभाविकोलोकानांस्वरसः वाहीकशब्दादमुमर्थंप्रत्येमीतिप्रत्ययस्तदाव्यंजनावृत्तिरप्रत्यूहैवेति स्वोक्तनिष्कृष्टमतम यदिप्रकरणानुभाविकोलोकानांस्वरसः तस्याअपिबोधकत्वादि
वलंव्यमूलमवतारयति नन्विति एवंबोधकत्वस्यैवशक्तित्वे तत्रापिअपभ्रंशात्मकभाषायामपिस्यादिति तस्याअपिबोधकत्वात् ई
स्वरेच्छादीनांशक्तित्ववादिनांतु नापमतिप्रसंगइतिभावः इष्टापत्तावाह तथाचेति नापभ्रंशितंवैइत्यादिनिषेधविधिविषयत्वा
नापत्त्येष्टापत्तेः कर्तुमशक्यत्वादितिभावः द्विधेति अपभ्रंशानामुक्तशक्तिमत्त्वाभावव्यवस्थापनेनसाधुत्वस्यान्यथानिर्वचनेनचेत्य

नन्वेवंभाषादितोबोधदर्शनाद्बोधकतारूपाशक्तिस्तत्रापिस्यात्तथाचसाधुतापिस्यात् शक्तत्वस्यैवसाधुतायाव्याकरणाधि
करणेप्रतिपादनादित्याशंक्यद्विधासमाधत्ते असाधुरनुमानेनवाचकःकैश्चिदिष्यते वाचकत्वाविशेषेवानियमःपुण्य
पापयोः असाधुः गाव्यादिः अनुमानेनसाधुशब्दमनुमायवाचकःबोधकइष्यते तथाचलिपिवत्तेषांसाधुस्मरणए
वोपयोगोनतुसाक्षाद्वाचकत्वमतोनसाधुत्वमितिभावः ॥ ऽर्थः मूलेअनुमानेनवाचकमिति अनुमानमत्रस्मृतिः अनु

पश्चान्मानंमितिरितिव्युत्पत्तेर्नतुव्याप्तिज्ञानम् तच्छून्यानामपिशाब्दबोधदर्शनात् गाव्याद्यऽपभ्रंशानांगवादिशब्दविकृतित्वेनो
द्बोधकविधयामहितिप्रकृतिस्मारकत्वादित्याशयेनव्याचष्टे अनुमानेनसाधुशब्दमिति अनुमायेतिस्मृत्वेत्यर्थः वक्ष्यतिच
तेषांसाधुस्मरणएवोपयोगइति अपभ्रंशानांसाक्षाद्बोधकतातुन शाब्दजनकसाधुत्वस्याभावादसाधुत्वज्ञानस्यप्रतिबंधक
त्वादितिभावः

गणनायामिति बहुत्वविशिष्टानेकसंख्यानेदृत्यर्थं कपिञ्जलानालभेतेति वाक्येन बहुत्वव्याप्यसंख्याविशिष्टकपिञ्जलालभनविधौ
पत्ते तत्र त्रयाणां चतुरादीनां वाऽऽलभनमिति सत्यपि बहुत्वव्याप्यस्य त्रित्वादिषु सर्वेष्वविशिष्टत्वाद्यथाप्राप्तमेवालब्धव्यमिति पूर्वपक्षे
चतुरादीनामालभनं माहिंस्यादिति सामान्यशास्त्रविहितनिषेधस्यालभ्यतावच्छेदकीतरपरत्वरूपतात्पर्यसंकोचकस्यने गौरवा
द्गणनायाप्रथमोपस्थितत्रित्वपरतयापि वचनस्य चारितार्थ्याल्लाघवाच्च बहुत्वेन त्रित्वमेव बहुवचनार्थ इति सिद्धान्तितत्वात्तत्र

गणनायांत्रित्वस्यैव प्रथमोपस्थितत्वात्तद्रूपेणैव भानवदेकत्वस्य सर्वत्र. प्रथमोपस्थितत्वमस्तीति भावः
वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा तथात्वे वा ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावात्तद्रूपेणैव वा
च्यतास्यादिति ध्येयम् ५४. इति वैयाकरणभूषणसारेऽभेदैकत्वसंख्यानिरूपणं समाप्तम् ॥ ६ ॥ ॥

पिण्ड्यात्वेनैकत्वस्यैव वृत्त्यर्थत्वं न तु द्वित्वादीनामप्रतीयमानविशेषधर्मैकत्वमभेदैकत्वमिति व्युत्पत्तेरिति भाव. जिज्ञासायामपि
त्यादिनिर्देशोऽस्मिन्व्याकरणे व्याप्तिन्यायस्यैवाश्रयणेन प्रकृते संख्यात्वेनैकत्वप्रतीतिर्हि सूपपादेत्यपि केचित् न तु जिज्ञासया शा
त्तमेव सामान्यधर्मप्रकारकज्ञानदर्शनमपेक्षितमिति न नियम. आम्रफलदर्शनेनापि तद्रसास्वादनेच्छायास्तदपेक्षाविरहात् न
चैवं सामान्यधर्मप्रकारकज्ञानस्यैव हेतुत्वं विलीयेतेति वाच्यम् आम्रदर्शनस्योद्बोधकतया तद्रससमरणेन तदुपपत्तेः प्रकृते त
स्याऽप्रत्यक्षत्वेऽपि तदव्यभिचरितद्रव्यत्वेनानुमानिकतद्बोधसंभवात् तादृशजिज्ञासायाश्चानुभवाच्चेनोक्तयुक्तिः ॥ ६ ॥

वृत्तेर्भेदैकत्वसंख्यार्थत्वसाधिकेत्यभिप्रेत्याह वस्तुतइति अनुभवसिद्धेति अस्य येन तदनुरोधेन सामान्यधर्मप्रकारकज्ञानस्यावश्यक
तास्यादिति शेषः अभेदैकत्वसंख्यायावृत्तौ भानमिति मूलंतु प्राचीनग्रंथानुवाद एवेति भावः अनुभवासिद्धत्वस्य शब्दनिर्णयत्वंमत्वाह त
थात्वेवेति अनुभवसिद्धत्वे चेत्यर्थः समानप्रकारकत्वेनैवेति एवकारेण विभिन्नप्रकारकत्वव्यवच्छेदः तद्धर्मप्रकारकेच्छां प्रति तद्ध
र्मप्रकारकत्वज्ञानस्य हेतुतायाः सुखादीच्छास्थले क्लृप्तत्वात्प्रकृते विशेषधर्मप्रकारकजिज्ञासायाः सावयवविषयत्वेन ज्ञानप्रकारीभू
तविशेषधर्मप्रकारकत्वस्यावश्यकत्वेन तत्पदार्थविशेषधर्मप्रकारकज्ञानकार्य्यतावच्छेदकाक्रांतत्वादिति भावः तत्तद्रूपेणेति ए
कत्वत्वादिरूपेणैवेत्यर्थः एवकारेण संख्यासामान्यधर्मव्यवच्छेदः इष्टापत्तिस्तु न तथा सति शब्दादेव विशेषधर्मावगतौ जिज्ञा
साया असंभवादिति भावः अत्र वदंति तद्धर्मप्रकारकज्ञानस्य कार्य्यतावच्छेदककोटौ स्वातंत्र्येण तद्धर्मप्रकारकत्वम् सामान्य
धर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारक जिज्ञासाजनकत्वानुरोधान्निवेशनीयम् अन्यथा सामान्यधर्मप्रकारकज्ञानस्योक्तजिज्ञासायां
प्रति हेतुत्वं विलीयेत न च तत्र मानाभावः जायते च कार्य्ये कारणे वाज्ञाते किमस्य कार्यं कारणं वेति दीधितिकृद्वाक्यस्यैव मानत्वात् प्रकृ
ते विशेषधर्मस्य पारतंत्र्येणैवेच्छांशे प्रकारत्वात्तद्धर्मप्रकारकज्ञानं विनापि सामान्यधर्मप्रकारकज्ञानात्तादृशजिज्ञासायाः सूपपाद
त्वात् सामान्यधर्मप्रकारकज्ञानंतु विशेषधर्मप्रकारत्वावच्छिन्नविशेष्यकेच्छात्वमिति न गुणत्वसामान्यज्ञानात्सुखादीच्छाप्रसक्तिरधि
कमन्यत्रानुसंधेयम् तथा चात्र जिज्ञासायाः सर्वसिद्धत्वेनदुपपत्तयेऽभेदैकत्वे वृत्तेर्वृत्तिरावश्यिका एवं चाभेदैकत्वसंख्यायावृत्ताविति
ति मूलस्य संगतिः एतेन भेदस्य तत्सहचरितद्वित्वादेरेकत्वस्य च या प्रतीतिस्तदभाव इत्यर्थपरतया व्याख्यानं परास्तमिति इति भूष

सख्याविवक्षा। विवक्षानिरूपणे सगतिं दर्शयति प्रसंगादिति अभेदैकत्वसख्यानिरूपणे कपिंजलानालभेतेत्यत्र विधेयविशेषणत्व
याभित्वसख्याविवक्षायाः स्वतत्वादुपेक्षानर्हत्वाच्चेत्यर्थः अविवक्षितमितीति तद्विवक्षणेयसि यथावत्याणांमाजेनाला
भाव धातोरितीति प्रत्ययविधौ धातोरिति सूत्रस्य धातुपदार्थविशेषणीभूतैकत्वादेरेतच्छास्त्रविवक्षणादित्यर्थः असम

संख्याप्रसंगादुद्देश्यविधेययोः सख्याविवक्षाविवक्षे निरूपयति लक्ष्यानुरोधात्सख्यायास
त्रातंत्रेमतेयत. पश्चैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ हंसमार्शीत्यत्रोद्देश्यगतमेकत्व
मविवक्षितमितिवन्नास्माकमुद्देश्यविशेषणस्याविवक्षानियमः धातोरित्येकत्वस्यविवक्षि
तत्वात् अन्यथेतसमस्तेभ्यो धातुभ्यः प्रत्ययो यदि तदा सर्वैर्विशिष्यतद्धोत्यन्नसुवर्धेयदिति
शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च आर्द्धधातुकस्येड्वलादेरित्यत्रतुयथाद्धधातुकविशे
॥षणस्यवलादित्वस्यविवक्षितत्वा

उद्देश्य गतविशेषणस्याविवक्षामीमांसकानामपिसमतेत्याह उत्पत्त्येनेति तदा
सप्रत्ययार्थः सर्वधात्वर्थैर्विशिष्यतेत्यर्थः ननुनेयमुक्तिर्विवक्षासाधिका तादृशसमुदायस्य क्रियावचनत्वाभावेनततः प्रत्य
त्सत्तेर्गगनकुसुमायमानत्वेन स्वतएव विवक्षासत्वादत आह आर्द्धधातुकस्येड्वलादेरितीति विवक्षितत्वाच्चेति अन्यथा तदुपस्थः

वमिति अनुवाद्यविशेषणमविवक्षितमेवा…
पशुर्विधीयते एवंच पशुशब्दस्य विधेयसमर्प्यकतया तदुपस्थितानां केषांचिद्ग्रहणे केषांचित्परित्यागे मानाभावेन पशुत्वपुंस्त्वादि वदेकत्वमपि यागसाधनत्वेन विवक्षितं तेन नानेकपशुकरणकतया तददृष्टसिद्धिरेवमन्यत्रापि विधेयविशेषणं विवक्षितमत्र विवक्षाकारणविरहादिति मीमांसकपरिशीलितां सरणिस्तदनुसरणनियमो नास्माकमित्यर्थः एतच्छास्त्रे तदाश्रयणेऽनिष्टं प्रदर्शयति रदाभ्यामिति विधानानापत्तेरिति नइत्येकवचनोपस्थितैकत्वस्यापि विधेयविशेषणतया तद्विवक्षायां नकारद्वयविधा

एवं पशुना यजेतेतिवद्विधेयविशेषणं विवक्षितमित्यपि नियमो न रदाभ्यां निष्ठातो नः पूर्वस्य च द इत्यत्र नकारद्वय विधानानापत्तेः तथा च भिन्न इत्यत्र नकारद्वयलाभो न स्यात् आद्गुण इत्यादौ एकत्वविवक्षयैवोपपत्तौ एकः पूर्वपरयोरित्यत्रैकग्रहणवैयर्थ्यापत्तेश्चेति भावः शब्दार्थस्तु संख्यायां लक्ष्यानुरोधात्तन्त्रानन्त्रेय तो मते अतः पश्वेकत्वाधिकरणोक्तं हेतूनामाश्रयणं नास्मात्सिद्धान्तसिद्धमिति आदिनाग्रहैकत्वसंग्रहः ५५॥ नंनस्यादित्यर्थः ननु मास्तु नद्वयविधानमत आह तथा चेति इदं चैकवाक्यतया विधानमभिप्रेत्य वाक्यभेदेन विधानपक्षे त्वाह आद्गुण इत्यादाविति एकत्वविवक्षयैवेति विधेयगुणगतैकत्वविवक्षयैवेत्यर्थः तथा चैकग्रहणमेवोक्तार्थज्ञापकमिति भावः ननु पश्वेकत्वादिविवक्षाहेतूनां जैमिनिसंमतत्वान्न तदाश्रयणस्यानाकरत्वमित्याशंकामपाकरिष्यन् योजनाप्रदर्शनमिषेणाकरपदार्थं व्याचष्टे शब्दार्थस्त्वित्यादि पश्वेकत्वाधिकरणोक्तहेतूनामिति पशुना यजेतेत्यत्र विधेयगतैकत्वस्याविवक्षणे पश्वन्तरालंभे प्रयोगपशुभावबाधेन यागवैगुण्यापत्तिः गुणानुरोधेन यागवृत्तौ प्रधानत्वभंगापत्तिर्यावत्पशुकरणकयागासंभवश्चेत्येवमादयो दोषा हेतवस्तेषामित्यर्थः सिद्धांतसिद्धमिति सिद्धांतार्थप्रतिपाद

तत्र अनयोः पूलयो. कटकवित्यादा विवाहुणः

आदेशभेदवारणायेति वस्तुतस्तुनैकग्रहणविधेयगतविशेषणाविवक्षायांतत्र अनयोः स्थाने एकविधानसंभवात्स्यानिभेदान्नानेकोगुण इत्येकग्रहणस्यंभा इत्यादावपिपूर्वपरयोरितिद्वन्द्वनिर्देशे नैकवाक्यतयैवोभयोः स्थाने एकविधानसंभवात्स्यानिभेदान्नानेकोगुण इत्येकग्रहणस्यंभा
इत्यादावपिपूर्वपरयोरितिद्वन्द्वनिर्देशेनैकवाक्यतयैवोभयोः स्थाने एकविधानसंभवात्
प्राजापत्यानवग्रहादितिवाक्यविहितग्रहोद्देशेन समार्गो विधीयते गृहं समार्ष्टीत्यनेनत
य्येप्रत्याख्यानादितिरहस्य वाक्यभेदादिरिति प्राजापत्यानवग्रहादितिवाक्यविहितग्रहोद्देशेन समार्गोविधीयते गृहं समार्ष्टीत्यनेनत
त्रानुवाद्यगृहैकत्वविवक्षायामुत्पत्तिवाक्यगतसंख्यायाविरोधाद्वाक्यभेदो विभिन्नविशेष्यकबोधजनकत्वंतदापत्त्यादीत्यर्थः

ननुविधेयविशेषणविवक्षा आवश्यकी अन्यथा सुध्युपास्य इत्यादावनंतयकाराद्यापत्तेः भिन्न इत्यत्र नकार इयवद
न्येषामप्यापत्तेः एकः पूर्वपरयोरित्यत्रैकग्रहणंस्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याह विधेयेभेदकंतत्र मन्यः
तोनियमोनहि हैकत्वादिहेतूनामाश्रयणमनाकर भेदकविशेषणंतत्र विवक्षितम् विधेयविशेषणविवक्षितमित्यर्थः
स्तु तथाप्यन्यतोऽनुवाद्यस्यनियमोनहि कचित्तन्त्रं कचिन्नेत्यर्थः हैकत्वादौ योहे वाक्यभेदादिस्तस्याआश्रयणमनाकर

अन्येतु एहसंमार्ष्टिनचैकमित्याकारकवाक्यभेदापत्तिमाहुः आदिपदेनोत्पत्तिवाक्यगतन वत्वसंख्ययाग्रहपदार्थस्यपरिच्छिन्नत्वा
दुत्पत्तिविच्छेदकाकाङ्क्षाभावस्यग्रहमितिद्वितीययासक्तार्थत्वलक्षणप्राधान्यबोधनात्प्रतिप्रधानंगुणावृत्तिरितिन्यायाद्विलिंगम
नाविरहात् संभावनैकनिरासफलकसमार्गस्यसर्वग्रहेष्वपेक्षणाद्धेयपश्वादिविशेषणवत्क्रियागतत्वाभावेन तद्वैकत्वस्य प्रयुक्ता
क्रियावैकल्यप्रसङ्गाच्च तद्विवक्षाविरहवीजस्यसंग्रहः अनाकरमितिपूर्ववत्

इडागमादेरित्यादिनोदीचामातः स्थानेयकपूर्वाया इति विहितेत्वसंग्रहः तत्राऽऽकारस्थानिकानमुद्दिश्येत्वविधानात् अतएवेत्सि
षेध विधायकेकाजितिसूत्रऽचइत्येकत्वविवक्षादरेणानेकाचून्तोपदेशव्यावृत्तिर्ग्रंथकृद्भिर्व्याख्याता वस्तुतस्तुग्रहैकत्वदृष्टान्तेना

एकत्वविशिष्टं धातुं बलादित्वविशिष्टमार्द्धधातुकंचोद्दिश्यप्रत्ययेडागमादेर्विधिसंभवादि
तिभावः ५५ नन्वेवंभिन्नइत्यत्र नकारद्वयलाभोनस्यादित्याह रदाभ्यांवाक्यभेदेन नका
रद्वयलाभतःसतिर्नैवास्तितंत्रत्वेविधेयेभेदकस्यतुचकारसूचिन न्निष्ठातस्यनःपूर्वस्यदका
रस्यचन इतिवाक्यभेदमादायनकारद्वयलाभइत्यर्थः ५६ इतिवैयाकरणभूषणसारेसंख्या
ऽऽविवक्षानिर्णयः ॥

त्राप्यनुवाद्यविशेषणानांक्वचिदविवक्षास्तुनदितरविशेषणानांविवक्षायांतुनकिंचिद्बाधकं मीमांसायामनुवाद्यांशेजातिलिंगसंख्या
तिरिक्तविशेषणस्यादर्शनादेषांचोत्पत्तिवाक्यादेवावगमेनानुषंगिकत्वादविवक्षायुज्यते प्रकृतेतुनतथेतिबोध्यम् ॥ इतिभूषणसा
रदर्पणेसंख्याविवक्षादिनिर्णयः॥

अवसरसंगतिस्त्वार्थनिरूपणे दर्शयति त्काप्रत्ययादेरिति प्रकृत्यर्थत्वस्य फलेपि सत्वादाह। भावइति तत्रापि सत्वभूतेव्यापार एव नतु पूर्वकालादावित्य
र्थः पाक इत्यादाविव पक्त्वा पक्त्वेत्यादि जन्यबोधे भावांशे विलक्षण्यस्यान्ननु भवादितिभावः वस्तुतस्तु पक्त्वेत्यादिर्जन्यबोधे भावे लिंगसंख्यानन्वयित्वा
त्तदनुभूयत एव एवं पक्तुमित्यादौ फलार्थकतुमुनासाध्यत्वेनत दोधार्थेत्युक्तप्रायमिति कागतिरिति तत्र पूर्वकाल इत्यासुपादानात् पूर्वकालादी
नावाच्यता प्रतीयते भावमात्रार्थकत्वे तु तदनुपपत्तिरितिभाव. समानकर्तृकत्वादीति तथाच समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालमवधीयोः
र्थस्तद्वाचकास्त्केत्यर्थः यकासायाकर्तरीत्यस्यप्रसक्तौ तद्बाधनार्थ चार्त्तिकारंभेण भावस्यैव वाच्यता निर्णीयते, कर्तुः प्रत्ययविशेषणत्वे तु समानकर्तृ

त्काप्रत्ययादेरर्थं निरूपयति अव्यय कृत इत्युक्तेः प्रकृत्यर्थे तुमादय समानकर्तृकत्वादि द्योत्यमेषामिति स्थिति ॥
५० तुमादयस्तुमुन्नादय प्रकृत्यर्थे भावे आदिनात्वादेः संग्रहः भावे इत्यत्र मानमाह अव्ययकृत इति अव्ययकृतोभा
वेइतिवार्तिकादित्यर्थः ननु समानकर्तृकयोः पूर्वकाले इत्यादि सूत्राणा का गतिस्तत्राह समानकर्तृकत्वादीति अयभाव.
भोक्तुं पचति भुक्त्वा व्रजति इत्यादावेकवाक्यता सर्वसिद्धा भोजनपाक क्रिययो विशेषणविशेष्यभावमन्तरेणानुपपन्ना॥

रीत्यैव ब्रूयात् सूत्रोपात्तानां तु द्योत्यत्वमेव वर्तमानत्वादिवदितिभावः वस्तुतस्तु नद्योत्यतायामपि निर्भर संसर्गमर्यादयैव तल्लाभ संभवादि
त्याह अयभावइति एकवाक्यतेति समानकर्तृकयोरित्यादि सूत्राणां धातु संबंधाधिकारीयत्वादितिभाव अनुपपन्नेति विशेष्यविशेषणत्वयोः
संसर्गविषयतानिरूप्यत्वेन संबंधं विनाविशिष्टबुद्धेरसंभवात्सम्बन्धभानं तदन्यतां विनाप्युपपन्नमितिभावः॥ ८ ॥ २ ॥

अन्यलभ्यत्वादिति अकांक्षानियम्यत्वाद्वाक्यशक्तिलभ्यत्वादित्यर्थः क्रिययोः संसर्ग इति प्रकृत्यर्थविशेषकत्वरूपस्तत्स्यासंभवेपि निरूढं यत्तदिह बोध्यमित्यर्थः अत एवेति क्त्वः समानकर्तृकत्वादिद्योतकत्वादेवेत्यर्थः भाष्यप्रतीकमिति इदं कस्मान्न भवति पूर्वं भुंक्ते पश्चाद्व्रजतीति स्वशब्देनोपात्तत्वादिति भाष्यं तत्र समानकर्तृकेन पूर्वकालत्वेन च क्त्व आपादनं ननु विषय इति ननु प्रयोगघटकयत्किंचित्पदबोध्य इत्यर्थः उक्तार्थानामप्रयोग इति न्यायादिति भावः तथा च समानकर्तृकयोरिति निर्द्धारणे षष्ठी पूर्वकाल इति च षष्ठ्यर्थे बहुव्रीहिरिति कैयटाशयः वाक्यार्थस्तु पूर्वमेवोक्तः न च पूर्वकालस्य पूर्वादिशब्देनाभिधानेक्त्वोऽसाधुत्वे पूर्वं भुक्त्वा पश्चाद्व्रजतीत्यत्र क्त्वो

एवं चान्यलभ्यत्वान्न सूत्रात्तेषां वाच्यत्वलाभ इति युक्तमव्ययकृतो भाव इति एवं च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्यग्राहकत्वरूपद्योतकत्वं क्त्वादीनां अत एव समानकर्तृकयोरिति सूत्रे स्वशब्देनोपात्तत्वान्नेति भाष्यप्रतीकमादाय पौर्वापर्यं काले द्योत्ये क्त्वादिर्विधीयते न तु विषये इति भाव इति कैयटः ॥ ऽऽऽनुपपत्तिस्तदवस्थैवेति वाच्यं भाष्यकृतैव तत्समाधानात् तथा च भाष्यं नैतत् क्रियापौर्वकाल्यं किं तर्हि कर्तृपौर्वकाल्यमेतत् पूर्वमसौ भुक्त्वान्येभ्यो व्रजितृभ्यः पश्चाद्व्रजतीति अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वाऽपरेभ्यो गंतृभ्यः पश्चाद्व्रजतीत्यर्थे साधनांतरक्रियापेक्षं पौर्वकाल्यमादाय विभाषाग्र इति क्त्वः संभव इति ~ ~ ~ तदाशयः नव्यास्तु पूर्वकाल इति कर्मधारयः भूत इति तु नोक्तं पर्य्यायशब्दत्वात् तेन रूपेण बोधनाननुभवाच्च तथा च समानकर्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तिधातोः क्त्वेति सूत्रार्थः तथा च पूर्वकालः क्त्वार्थो धात्वर्थप्रकार एव अत एव समानकर्तृकत्वे न पूर्वं भुंक्ते पश्चाद्व्रजतीत्यत्र क्त्वाप्रत्ययमाशंक्य स्वशब्देनोपात्तत्वान्नेति परिहृतं भाष्ये पूर्वशब्दस्य पूर्वकालोर्थो न तु धातोस्तत्र वृत्ति

रितिनरर्थो न तून्क्त्वार्थानामप्रयोगइति अतएवेहक्कसान्नभवत्यास्यते भोक्तुमित्यभिमर्शकासंगतिः अन्यथा फलार्थकतुमुना पूर्वकालत्व
स्याऽसिक्रियायाद्योतनात्तदसंगतिः स्पष्टैव पूर्वकालत्वस्य ततोऽप्रतीतेस्तु कथं क्त्वा आपादनं वा सरूपन्यायेन लङा साधितमित्यन्यत्र ए
वं च यथास्त्वेव धवाचकत्ववदमीषामपि संबंधवाचकत्वमुवचमित्याहुः अत्रेदं चिन्त्यम् ननु धातोस्तत्र तनिरित्यर्थे आस्यते भोक्तु
मित्यपि मर्शकानुपपत्तेरुपष्टंभकत्वेनोपन्यसनं शिथिलं यतः कैयटमते प्यास्यर्थे पूर्वकालसंबंधित्वस्य केनचिदनभिधाने नो क्त्वार्थो
नामप्रयोगइतिन्यायानवतारादाशंकोत्थानसंभवात्प्रत्ययशब्दस्य कृत्प्रत्ययस्थले धात्वर्थविशेष्यतायां नव्यानामपि संमतत्वेन पूर्व
कालः क्त्वार्थो धात्वर्थप्रकार एवेति पूर्वग्रंथविरोधश्च न च योनकत्वाभ्युपगमादुक्तसंगतिः षष्ठ्याः संबंधवाचकत्ववदमीषामपि संबं

यत्तु समानकर्तृकयोरिति सूत्रात्समानकर्तृकत्वं क्त्वावाच्यम् अन्यथौदनं पक्त्वाऽहं भोक्ष्ये इत्यत्र मयेति तृतीयाप्र
संगश्च न चास्यानेन कर्तुरभिधानात्सेति वाच्यं भोजनक्रियाकर्तुरभिधानेपि पाकक्रियाकर्तुस्तदभावात् ॥ ९ ॥

धवाचकत्वमित्युत्तरग्रंथविरोधात् न च तदपि सुवचं समानकर्तृकत्वादीनां वाच्यतायां सूत्रादलाभात् तस्मात्कर्मप्रवचनीयवत्क्रि
यासंबंधविशेषकत्वमेव क्त्वादीनामितिकैयटोक्तमेव सम्यगिति ॥ ९ ॥ ॥मतांतरं दूषयितुमुपन्यस्यति यत्त्विति क्त्वावाच्य
मिति समानकर्तृकयोः पूर्वकालेइत्युभयोः पदयोर्बहुव्रीहित्वाविशेषेण पूर्वकालस्य वाच्यत्वमितरार्थस्य द्योत्यत्वमिति वैषम्ये बीजा
भावादिति वैषम्ये बाधकमाह अन्यथेति तस्य क्त्वाप्रत्ययावाच्यत्वे इत्यर्थः तृतीयाप्रसंगादिति क्त्वाप्रत्ययेन कर्तुरनभिधानादि ९
तिभावः नन्वनभिहितइतिसूत्रेण नञ् प्रसज्यप्रतिषेधार्थकतया प्रकृते कर्तुर्गाख्यातेनाभिधानान्न तृतीयाप्रसक्तिः स्यादित्याशंक्य

अन्यथेति विशेष्यविशेषणभावमन्तरेणाप्येकवाक्यताभ्युपगमे इत्यर्थः सामानाधिकरण्यमिति एकाश्रयवृत्तित्वमित्यर्थः पूर्वोत्तरभावः स्वोत्तरसमयोत्पत्तिकत्वं स्वपूर्वसमयवृत्तित्वं वा व्याप्यत्वम् अविनाभावित्वम् तुमुनादौ तेशाब्दबोधदिशमाह तथाचेति भोजनजनिकेति जनकत्वस्यात्र संसर्गतेति स्फुटीकर्तुमियमुक्तिः बोधाकारस्तु भोजनविशिष्टैव जनकत्वस्यापदार्थतयाऽप्रकारत्वात् क्रिययोर्जन्यजनकभावस्यापि संबंधत्वे युक्तिमाह अतएवेति जन्यत्वस्य संसर्गत्वाभ्युपगमादेवेत्यर्थः जलपानानंतर्यस्येत्यनेन पूर्वोत्तरभावसंबंधसत्त्वं बोध्यते त

अन्यथा भुक्त्वा व्रजतीत्यादावप्येकवाक्यतापत्तेः तथाच तयोर्विशेषणविशेष्यभावनिरूपकः संसर्गो जन्यत्वं सामानाधिकरण्यं पूर्वोत्तरभावो व्याप्यत्वं चेत्यादिरनेकविधः तथाच भोक्तुं पचति भुक्त्वा तृप्त इत्यादौ भोजनजनिका पाकक्रिया भोजनजन्या तृप्तिरिति बोधः अतएव जलपानानंतर्यस्य तृप्तौ सत्त्वेऽपि पीत्वा तृप्त इति न प्रयोगः सामानाधिकरण्यस्यापि संसर्गत्वे नार्थात् समानकर्तृकत्वमपि लभ्यम् भुक्त्वा व्रजतीत्यादौ पूर्वोत्तरभावः सामानाधिकारण्यञ्च संसर्ग इति भोजनसमानाधिकरणा तदुत्तरकालिकी व्रजनक्रियेति बोधः॥ ॥

जन्यत्वविवक्षायां तु प्रयोग इष्ट एवेति भावः सामानाधिकरण्यस्य संसर्गताभ्युपगमस्तु यत्र पूर्वापरीभावापन्नभोजनतृप्त्योर्वैयधिकरण्यं तत्र भुक्त्वा तृप्यतीति प्रयोगवारणाय अव्यवहितोत्तरत्वस्य तु दिनान्तरितपूर्वकालवृत्ति समानाधिकरणभोजनादिक्रियामादाय तत्त्वावारणाय व्यवधानञ्च तात्पर्यवशाद्दण्डमुहूर्त्तादिना ग्राह्यम् अतो भोजनानन्तरं दण्डादिव्यवधानेऽपि न तादृशप्रयोगानुपपत्तिरिति बोध्यम्॥ ॥ ॥ ॥

नचेति अनभिहितइति नप्रसज्यप्रतिषेधो वाक्यभेदादिदोषात् नचानुपपत्त्यानत्स्वीकारः वक्ष्यमाणभाष्यविरोधात् तथाचैकेनाभिधानेप्यन्येनानभिधानात्तृतीयापत्तिरित्यभिप्रायेणाह पाकक्रियाकर्तुरित्यादि तदभावादिति अभिहितभिन्नत्वादित्यर्थः अतएवेति तत्सूत्रस्थनञः पर्युदासार्थकत्वादेवेत्यर्थः भाष्येइत्यस्यानभिहितसूत्रस्थेइतिशेषः तस्येति समानकर्तृकत्वस्येत्यर्थः द्विवचनप्रकृतिबहुव्रीहिणासमानकर्तृकत्वस्यधात्वर्थविशेषणत्वेवप्रतीयतेनतुविधीयमानक्त्वइतिभावः तदेवविशदयति अन्यथेति एतत्सू

अनभिहितेभवतीतिपर्युदासाश्रयणात् अतएवप्रासादेआस्तेइत्यत्रप्रासादनक्रियाधिकरणस्याभिधानेप्यास्ति क्रियाधिकरणस्यानभिधानात्सप्तमीतिभाष्येस्पष्टं तस्मात्क्त्वाप्रत्ययस्यकर्तृवाचित्वमावश्यकमिति तन्न सूत्रान्तस्य वाच्यत्वालाभात् समानकर्तृकयोः क्रिययोः पूर्वकालेक्त्वाइत्येवतदर्थात् अन्यथासमानकर्तरीत्येवसूत्रन्यासःस्यात् तृतीयापादनंत्वाख्यातार्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात् प्रधानानुरोधेनगुणेकार्यप्रवृत्तेर्नसंभवति उक्तं च वाक्यपदीये ।। त्वस्यकर्तृशक्तिप्रतिपादकत्वेइत्यर्थः समानेति तदुपादानाच्चकर्तृइत्यस्यैवलाभः न्यासःस्यादिति कर्तरिकृदितिवत् वस्तुतस्तुनतथासम्भवतिकर्तरिकृदितिसूत्रेणैवगतार्थत्वादव्ययकृतोभावइतिवार्त्तिकविरोधाच्चेतिभावः उक्तापत्तिंनिरस्यति तृतीयापादनंत्विति आख्यातार्थक्रियायाइति क्रियाद्वयनिरूपितकर्तृशक्त्योरनेकत्वेपिप्रधानतिङर्थक्रियानिरूपितकर्तृशक्तेराख्यातेनाभिधानेतत्रकृदन्तार्थक्रियानिरूपिततच्छक्तेरनभिहितायाअप्यभिहितत्वातिदेशस्यअनभिधानेत्वनभिहितत्वातिदेशस्यचोक्तभाष्यप्रामाण्येनाभ्युपगमान्नतृतीयापत्तिःप्रकृतेइतिभावः ।।

प्रधानक्रियानिरूपितशक्तिः प्रधानक्रियानिरूपितशक्तिर्धर्मम
प्रधानेतरयोरिति गुणप्रधानक्रियानिरूपितशक्तिद्वयवत्त्वेकस्मिन्द्रव्ये तत्र गुणक्रियानिरूपितशक्तिः प्रधानक्रियानिरूपितशक्तिर्यदा प्रत्ययेन तिङाभिधीयते तदा
तुरूणञ्चीत्यर्थः उक्तातिदेशे पितत्समतिमाह प्रधानविषयेति प्रधानविषयो निरूपकयस्याः साशक्तिर्यदा प्रत्ययेन तिङाभिधीयते तदा
गुणक्रियावाचकधातूत्तरप्रत्ययेनानभिहितापि अभिहितवत्प्रतीयत इत्यर्थः इदमुपलक्षणम् अभिहितायाअपि अनभिहितत्वप्रती
ते तत्रप्रासादेऽआस्त इत्युदाहार्य्यम् अवश्यं चेत्थमभ्युपेतव्यमन्यथा कर्तुः स्वार्थत्वाभ्युपगमेनोक्तस्थले तृतीयापत्तिवारणेऽपि
स्त्वौदनो मया भुक्त इत्यत्रौदनपदोत्तरद्वितीयापत्तिः स्यादेव तत्र पाकक्रियानिरूपितकर्मशक्तेः कृतानभिधानादुक्तरीतेरसंभवात्
दित्याह किञ्चेति अत्रेदं बोध्यम् यदौदने पाकक्रियानिरूपितकर्मत्वमेव शाब्दविषयत्वमभिप्रेतं न तु प्रधानक्रियानिरूपितकर्मत्वं

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते १ प्रधानविषया शक्तिः प्रत्ययेनाऽ
भिधीयते यदा गुणे तदा तद्वदेवोक्तापि प्रतीयत इति किञ्चान्यथा कर्मणोऽपि स्वार्थतापत्तिः पक्त्वौदनो मया भुज्यते
इत्यत्र द्वितीयाया प्रकारान्तरेणावारणात् इत्यास्तां विस्तर इति वैया० भूषणसारे स्वाद्यर्थनिर्णयः ॥ स्थापितदोदनपक्ता

भुज्यत इत्यपि साधु ओदनस्य भोजनकर्मताया आर्थिकत्वात् यदा तूभयकर्मत्वस्यैव शाब्दविषयत्वमभिप्रेतं तदौदनपदाद्द्वितीयास्य
साध्येन उक्तव्यवस्थिते परं त्वाख्यातवाच्यक्रियायाः प्राधान्यतामत्सेवक्त्वोपस्थिता सर्वा क्रियागुणीभवति नैतु तासां परस्परं विशेष्य
विशेषणभाव गुणानामपरार्थत्वादिति न्यायादेव स्नात्वा पीत्वा भुक्त्वा व्रजति भुक्त्वा स्नात्वा पीत्वा व्रजतीत्य विशेषेण प्रयोगाः तुमुन्नन्तादि
र्थरूपमुद्देश्यत्वमपि द्योत्यं क्रियार्थायां क्रियायामित्युक्ते तन्निकर्षश्च पूर्ववदेव तुमुन्नन्तस्यर्थोपपदार्थयोस्तादर्थ्यं च समानकर्तृकत्वादि
रिदं स्पष्टं दर्शनकर्तृकयानमिति शाब्दधीः अनयैव रीत्या धात्वर्थान्तरकोत्र

इत्थं व्याकरणादिना गृहीतशक्तिकपदसमुदायादनासन्नाद गृहीतार्थतात्पर्य्यकाद योग्यादनाकांक्षाच्च शाब्दबोधादर्शनादासत्त्यादिकमपिश
क्तिज्ञानजन्यपदार्थोपस्थित्या बोधजननीये सहकारि आसत्तिश्च प्रकृतबोधानुकूलपदाव्यवधानं अस्ति च पर्वतो वह्निमानित्यत्र तादृशप
दाव्यवधानं ननु गिरिर्भुक्तं वह्निमान् देवदत्तेनेति न ततो बोधः अत एव स्थाल्यां तण्डुलं पचतीत्यत्र तण्डुलकर्मकस्थाल्यधिकरणकक्रि
येति बोधे नानासन्नता तद्घटकसर्वेषां पदानां तादृशबोधानुकूलत्वात् स्थाल्यां पचतीत्येतावन्मात्रबोधे तु तं दनासन्नमेव श्लोकादौ तु योऽ
जना वाक्यादेव बोधः तद्क्रमेणानासन्नाद्बोधदर्शनात्तज्ज्ञानमेव हेतुरिति संप्रदायः नव्यास्तु मौनिश्लोकादन्वयबोधानुदयप्रसंगान्नोक्ता
व्यवधानमासत्तिः आकांक्षादिसत्त्वे तात्पर्य्यज्ञाने च सति व्यवहितादव्यवहिताच्च बोधदर्शनात्तज्ज्ञानविलंबेन शाब्दाविलंबाच्च किन्त्वि

सिद्धान्तनिष्कर्षमाह वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः १ य
द्यपि वर्णस्फोटः पदस्फोटो वाक्यस्फोटः अखण्डपदवाक्यस्फोटौ वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः
सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं दुरर्थकं च॥ इदं पदमेतत्पदेन संभूयान्वयबोधं जनयत्वित्याकारकपदतात्पर्य्यरू

पाभिसंधापयित्रिच्छा सा ननु वक्त्रिच्छा मौनिश्लोकादौ दोषत्वादवस्थ्यात् शुकवाक्ये तु भगवत्तात्पर्य्यमादायैव गतिरित्याहुः वस्तुतस्तु
सत्यर्थे तात्पर्य्यज्ञाने पदतात्पर्यज्ञानविलंबेन शाब्दबोधाविलंबाद्द्त्या पदजन्यपदार्थानामव्यवधाने नोपस्थितिरेवासत्तिः स्वरू
पसत्यन्वयबोधे हेतुः न हि पदार्थानामनुपस्थितावन्वयधीः केनाप्यनुभूयत इति अर्थतात्पर्य्यं त्विदं पदमेतस्मिन्नर्थेऽपरपदार्थान्वयबोध
यत्वित्यभिसंधापयित्रिच्छा विसंवादि शुकवाक्ये तु भगवत एव सा विसंवादिनि तु शिक्षयितुरेव अस्य संशये व्यतिरेकनिश्चये चान्वयाबोधा

तज्ज्ञानमप्यन्वयबोधहेतुः अधिकमग्रेवक्ष्यते शाब्दबोधेयोग्यताया ज्ञानकारणमितिवस्तुतः साचैकपदार्थेऽपरपदार्थस्ययादृशसंसर्गवत्त्व
तादृशसंसर्गवत्त्वेनैवप्रकृतशाब्दबोधविषयसंसर्गवत्त्वमितियावत् अस्तिच पयसासिंचतीत्यत्रसेकेपयःकरणकत्वस्यसंसर्ग अतएवक
रकाभिप्रायप्रयुक्तपयसासिंचतीतिवाक्यनयोग्यं पयःपदार्थकरकायांसेककरणत्वाभावात् यादृशेति विशेषणस्याकाशशब्दइतिवा
क्यसमवायसंसर्गमादायनाभेदान्वयेयोग्य अयोग्येप्येतद्भ्रमेणान्वयदर्शनादेतज्ज्ञानस्यापिहेतुतानानुसंसर्गस्यवाक्यार्थत्वेनतद्बोधाः
त्प्रागनुपस्थित्याकथंतद्बोधस्यतत्रतत्त्वमितिचेन्नहियोग्यताज्ञानस्यशाब्दबोधेनिश्चयत्वेनहेतुताबुभोयेनोक्तदोषोवकाशमासादयेत्
किंतुसंशयनिश्चयसाधारणज्ञानत्वेनतस्यचनदोलभ्यं पयसासिञ्चतीत्यादौसेकेपयःकरणकोनवेतिसंशयात्मकस्यभूतलेघटोस्तीत्या
दौचप्रात्यक्षिकनिश्चयरूपस्यापितत्प्राक्सौलभ्यात् स्वजन्यशाब्दबोधस्यैवान्वयबोधप्रतिबंधकतयोक्तबोधात्तत्संभवात् केचित्तुलौकि
कसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धित्वावच्छिन्नप्रतितदभाववत्ताज्ञानाभावस्यहेतुतयाशाब्दबोधस्यापितत्कार्यतावच्छे
दकाक्रान्ततयाऽयोग्यताज्ञानसत्त्वेतदभावादेवशाब्दबोधवारणेकृतंयोग्यताज्ञानस्यतद्धेतुतया कार्यतावच्छेदककोटौप्रत्यक्षान्यत्वनि
वेशेनैवलौकिकप्रत्यक्षनिरासेपिघटाद्युपनीतभानसंग्रहायतद्धिरूपाजन्यान्तदृयनिवेशः नचबाधनिश्चयाभावस्यापेक्षयासंशयनिश्च
यसाधारणयोग्यताज्ञानत्वेनहेतुत्वेलाघवनितिवाच्यम् स्यादेवंयदिबाधाभावस्यशाब्दत्वंकार्यतावच्छेदकंकल्प्येत किंतुशाब्दबोध
स्यबाधाभावकार्यतावच्छेदकाक्रान्ततयातदृशार्थतंप्रतिषेधामः अतएवघटोऽभिधेयइत्यादावुक्तबाधाप्रसिद्धावपिनक्षतिः तत्संस
र्गावच्छिन्नतत्प्रकारकतद्विशेष्यकत्वादि वृत्तित्वस्यैवतत्कार्यतावच्छेदकत्वात् घटाभावेऽभिधेयत्वप्रतियोगिकत्वभ्रमदशामादायतद
भावस्यापिप्रसिद्धेरित्याहुः अत्रवदन्तिनहितद्विशिष्टबुद्धिसामान्येबाधाभावःकारणं किंतुबाधावगाहकज्ञानसामग्र्याः प्रत्यक्षोदय

विशेष्यत्व

शाब्दबोधेऽसंभवात् नच तथाप्यनुमितिसाधारणप्रतिबध्यतायाः शाब्दबोधसाधारण्यं शक्यम् तत्साधारणस्य प्रत्यक्षान्यज्ञानत्वस्य प्रति
बध्यतावच्छेदकत्वे प्रत्यक्षान्यत्व ज्ञानत्व योर्व्यामिश्रे विशेषणभावे विनिगमनाविरहेणानेकप्रतिबध्यप्रतिबंधकभावापत्तेः प्रतिबध्यता व
च्छेदकगौरवापत्तेश्चानुमितित्वस्यैव तदवच्छेदकत्वस्यांगीकरणीयत्वात् अतो बाधाभावस्य स्वातंत्र्येणैव शाब्दबोधं प्रति हेतुता वाच्या तत्र
चोक्तगौरवेण संसर्गरूपयोग्यताज्ञानस्यैव हेतुत्वमुचितम् अपि च शाब्दबोधे तद्धूदन्योन्याभावतदभावव्याप्यवत्ताज्ञानादीनां प्रतिबंधकत्व
कल्पनापेक्षया लाघवाद्योग्यताज्ञानस्यैव हेतुत्वमुचितम् किंच पयसा सिंचतीति शाब्दसामग्री काले सेकः पयःकरणकत्वाभाववानिति मान
सवारणाय तत्र शाब्दबोधसामग्र्याः प्रतिबंधकत्वकल्पने गौरवं मन्मतेन तत्र योग्यताज्ञानस्यावश्यकतया विपरीतज्ञानोत्तरप्रत्यक्षे विशेषद
र्शनस्य हेतुतया तदभावादेव तद्वारणात् विशेषदर्शनस्य त्वेतु तदभावव्याप्यवत्तानिर्णयरूपप्रतिबंधकसत्त्वेन शाब्दसामग्र्या एवाभावेन तत्
था मानसे दुरापत्तेः नच निर्णयं प्रत्येव विशेषदर्शनस्य हेतुतया शाब्दसामग्रीकाले मानससंशयवारणाय शाब्दसामग्र्याः प्रतिबंधकत्वे क
ल्पनीये संशयत्वमनिवेश्य सेकत्वावच्छिन्नविशेष्यकपयःकरणकत्वाभावप्रकारकमानसत्वमेव तत्प्रतिबध्यतावच्छेदकमिति वाच्यं से
कत्वावच्छिन्नविशेष्यकपयःकरणकत्वप्रकारकमानसे शाब्दसामग्रीप्रतिबंधकत्वांतरस्य कल्प्यतया तेनैव संशयवारणेन तत्संशये प्रतिबं
धकत्वांतराकल्पनात् नच विपरीतज्ञानोत्तरप्रत्यक्षे विशेषदर्शनस्य हेतुत्वसिद्धावेव योग्यताज्ञानस्य हेतुत्वसिद्धिरिति वाच्यं गुरुभूतशाब्द
सामग्रीप्रतिबंधकत्वांतरस्य कल्पनाया एवोचितत्वादनयैव दिशा स्वसाधनत्वादिज्ञानानां प्रवृत्तौ हेतुतासिद्धिरित्यलं परमतानुवर्णनेन घ
टः कर्मत्वमित्याधाराधेयभावेनान्वये निराकांक्षवाक्याद्द्वितीयाकर्मत्वेति बोधानुदयादाकांक्षापि सहकारिणी सा च यत्पदे यत्पदसमभि
व्याहारप्रयुक्तं यद्विशेष्यकयत्संसर्गकयत्प्रकारकबोधजनकत्वं तत्पदे तत्पदनिरूपिताऽऽकांक्षा यथा घटमानयेत्यत्र घटपदे कर्मता

स्वधातुपदेष्पा स्यात किंरूपिताकाङ्क्षा अतएवानयनंरुतिरित्यत्र नानयनानुकूलारुतिरितिबोध धातावाख्याता समभिव्याहारात् इत्यमे
वाकाङ्क्षाव्याकरणेनप्रतिपाद्यते तथाचतत्त्वदेतत्त्वद पूर्वापरीभावरूपसमभिव्याहार सेतिफलति तांविनायद्यप्युक्तानाकाङ्क्षैकमेव
पदेऽतत्पद त्वमसमद शापोघटीयाक्रमेते तिबोधोद येनतज्ज्ञानहेतुर्नतुस्वरूपसतीसा नचतज्जनितान्वयबोधाद्याक्यान्तुनरपिताट शबोधा
पनिरुक्ताकाङ्क्षायास्तवानीमप्यविकलत्वादितिवाच्यम् प्ररुतान्वयबोधसमानाकारबोधानुपहितत्वस्यापि स्वरूपसतआकाङ्क्षात्वेनः
जनितान्वयबोधस्यलेतद्भावानापत्त्यसभवात् तात्पर्य्यविषयत्वरूपप्ररुतत्वेनबोधविशेषणाच्चबोधद्वयजायतामितितात्पर्य्यसत्त्वे
नजनितान्वयबोधस्यद्वितीयबोधेनिराकाङ्क्षत्वस्वसमानेत्युक्तेश्चनजनितावानरबोधस्यमहावाक्यार्थबोधेनत्वम् अतएवायमेतिराजः
पुरुषोऽपसार्य्यतामित्यादौराज्ञःपुरुषेणसहान्वयबोधजननेसर्वदानिराकाङ्क्षत्वम् नन्वस्तुयत्पदस्ययत्पदव्यतिरेकप्रयुक्तात्पर्य्य
विषयीभूतान्वयाननुभावकत्वंतेनसहतस्याकाङ्क्षा अयमेतिराजःपुरुषइतिवाक्येराजपुरुषसंसर्गप्रतीतीच्छयोच्चरितेराजइत्यस्यपुरुः
षेणसाकाङ्क्षत्ववारणायान्वयबोधेतात्पर्य्यविशेषणमेवचनतात्पर्य्यज्ञानस्यशाब्दबोधेपृथग्घेतुता अगृहीतार्थतात्पर्य्यकेनिरुक्ताका
ङ्क्षाज्ञानाभावादेवान्वयबोधापत्त्यभावादित्याहु एवंचशाब्दबोधात्प्रागवश्यक्लृप्ततत्तत्पदसमभिव्याहाररूपाकाङ्क्षयैवान्वयरूपवाक्या
र्थभानोपपत्तौवाक्यस्यनतत्रशक्तिरित्यप्रमाणेतिनैयायिकावदति मीमांसकादयस्तुवाक्यस्यतत्रलक्षणैवनतुतत्रशक्तिरितितन्मतंस्व
एडयितुस्फोटनिरूपणमित्याशयेनमूलमवतारयति सिद्धान्तेति यद्यप्यनूक्तव्याकरणस्यप्ररुतिप्रत्ययेषुतत्तदर्थबोधकत्वशक्तिप्र
तिपादकत्वमनुपपन्नप्ररुतिप्रत्ययानांक्षणिकानुविनाशिनानावर्णात्मकतयाऽस्थिरत्वेनप्रत्यक्षतयातत्रशक्तिग्रहस्यकथमप्यसंभ
वेनतत्प्रतिपादकस्यास्यशास्त्रस्याप्रामाण्यप्रसङ्गइत्याशङ्कानिराकरणायस्फोटनिरूपणमित्याह सिद्धान्तनिष्कर्षमितितथाचोपोद्घा

समाधत्ते तथापीति अन्येषांवर्णादिपंचस्फोटानामित्यर्थः तत्रस्फोटत्वंस्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादितिव्युत्पत्त्यार्थप्रकाशकत्वं प्रकाशश्चज्ञानं तथाचार्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वंपर्य्यवस्यति वर्णस्यैवतत्त्वाभ्युपगमेवर्णस्फोटः पदादीनांतत्त्वाभ्युपगमेतुपदादिस्फोटइतिव्यवहारः अवास्तवत्वेति वर्णस्फोटादीनामाकांक्षानिवर्त्तकत्वाभावा दवास्तवत्वंशास्त्रीयप्रक्रियानिर्वाहायपरंसिद्धांतेतत्स्वीकारःपारमार्थिकत्वंतुवाक्यस्फोटस्यैवेति भावः विप्रतिपत्तिरितिसंशयीययावत्कोऽभ्युपस्थापकंवाक्यमित्यर्थः ननुसंशयजनकंवाक्यमेवसापरोक्षंज्ञानंनिश्चयात्मकमेवेतिप्राचीनप्रवाशेनसंशयजनकत्वस्यवाक्येऽसंभवात्विप्रतिपत्तिसंशयजनकवाक्यत्वमेववि

तथापिवाक्यस्फोटातिरिक्तानामन्येषामप्यवास्तवत्वबोधनायतदुपादानम् एतदेवध्वनयति अतिनिष्कर्षेइतिइति मतस्थितिर्वैयाकरणानांमहाभाष्यकारादीनां तत्रक्रमेणसर्वांस्तान्निरूपयन्वर्णस्फोटंप्रथममाह साधुशब्दइति ॥

प्रतिपत्तित्वम् तत्तदभावसहचरितधर्मवद्धर्मिज्ञानस्यैवसमानानेकेतिसूत्रेणविप्रतिपत्तेरप्याह त्यैवसंशयहेतुत्वोक्तीर्नेनादित्यवधेयं मूलअसाधुशब्दान्तर्गतवर्णवाचकताविचारस्याप्रसक्तु तत्वंमत्वाह साध्विति अत्रसाध्वंतर्गतवर्णत्वसामानाधिकरण्येनवाचकत्वादिसाधनेनद्वाक्यस्यविप्रतिपत्तित्वासंभवः नैयायिकैरपिसाध्वन्तर्गतानांकेषांचिद्वाचकत्वाभ्युपगमात् तादृशवर्णत्वव्यवच्छेदेनवाचकत्वादिसाधनेतुवैयाकरणानांपरेषांविकरणेषुबाधश्चातआह तत्स्मृताइति॥

नैयायिकमतं दूषयितुमुपन्यस्यति यत्त्विति वाचकत्वाभावे प्रयोजकमाह तेषामिति बहुत्वेनेत्युपलक्षणमनुगमकधर्माभावस्या
पि तिङ्त्वसुप्त्वादीनामेकवचनत्वादिवदनुगमकत्वासंभवात् तिङ्त्वाद्युपस्थितिं विनापि त्वाद्यर्थोपस्थितेर्व्यभिचारेण शक्ततानवच्छेद
कत्वाच्चेति बोध्यम् ननु तिबाद्यादेशिनामपि तत्तदनुबंधभेदेन नानात्वान्नोक्तरीत्या तेषां वाचकत्वमत आह एधामिति अनुप्रयुज्यमान
धातूत्तरैधादिनापि तदर्थबोधोपपत्तेर्नोक्तदोषः तत्राह ब्रह्मेति आदिनाऽघतिष्योलिडधुगित्यादिसंग्रहः लुगादेरित्यादिना लुब्लोपयोः
सः तैरिति आदेशैरित्यर्थः उक्तदोषमाशंक्याह लत्वस्येति जातिरूपतयेति लडादिलेष्वलत्वस्यानुगतप्रतीत्या तत्सिद्धिरित्यभिप्रायः नव्याः

यत्तु प्रयोगांतर्गतास्तिबादयो न वाचकास्तेषां बहुत्वेन शक्त्यानंत्यापत्तेः एधांचक्रे ब्रह्मेत्यादावादेशभूतलुगादेरभावरूप
स्यबोधकत्वासंभवाच्च किंतु तैः स्मृता लकाराः स्वादयश्च वाचकाः लत्वस्य जातिरूपतया शक्ततावच्छेदकत्वौचित्यात् अव्यभि
चाराच्च आदेशानां भिन्नतया परस्परव्यभिचारित्वात् लः कर्मणीत्याद्यनुशासनानुगुण्याच्च न ह्यादेशेष्वर्थबोधकमनुशा
॥सनमुपलभामहे इत्याहुः

सुशक्ततावच्छेदकतया तत्सिद्धिः सर्वलकारसाधारणलत्वस्यातिप्रसक्तत्वाद्यलकारमात्रवृत्तेसुशक्तिग्रहो
त्पूर्वमनुपस्थितेःपचन्तीत्यादौ कृतिबोधापत्त्या तस्य शक्ततावच्छेदकत्वासंभवाच्च तित्वतत्वादिकमेव तदवच्छेदकमित्याहुः तथा चो
क्तविप्रतिपत्तौ प्राचीनैः सह विवाद एवेति बोध्यम् अव्यभिचाराच्चेति लत्वावच्छिन्नशक्तिग्रहस्य कृतिबोधात्पूर्वं नियमेन सत्त्वात् ति
दीनां शक्यतावच्छेदकत्वे तु तदवच्छिन्नशक्तिग्रहं विनापि तसादिशक्तिग्रहवतः कृतिबोधेनादेशवाचकतावादिमते व्यभिचारो दुर्वार इ
ति भावः ननु कार्यतावच्छेदककोटाववव्यवहितोत्तरत्वनिवेशान्नेयमापत्तिरत आह लः कर्मणीतीति इत्याहुरिति तथा चादेशानामेव

स्वसाधकेति स्वमतपरिपोषकेत्यर्थः व्यवस्थितेरित्यादिपद्यस्य तत्रयस्य पूर्वकारिकास्थबोधकपदार्थैः न्वयमद्र्शयन्नादौ व्यवस्थितेः रित्येतद्विवृणोति व्यवस्थानुरोधादिति प्रमाणेन पदार्थनिर्द्धारणव्यवस्थातदन्यथानुपपत्तेरित्यर्थः शक्तिभ्रमादिति लत्वावच्छिन्न निष्ठवाचकत्वस्य तत्रारोपादित्यर्थः मानाभावादिति विषयबाधस्यैव भ्रमत्वे तत्र तथाप्रकृते बोधकत्वशक्तेस्तत्राबाधादिति भावः न न्यादेशानां बहुत्वमेव तत्र शक्तिस्वीकारे वाचकमतन्त्राह आदेशिनामपीति वैयाकरणैः शाकटायनप्रभृतिभिः व्यवस्थेति इदमेव

तान् स्वसाधकयुक्तिभिर्निराचष्टे व्यवस्थितेर्व्यवहृतेस्तद्वन्न्यायपतस्तथा किमारव्यातेन शक्ताचेत्लेदेवस्मार्यते यदि १ कथं कर्तुरवाच्यत्ववाच्यतेन तद्धिभावय व्यवस्थानुरोधात्प्रयोगान्तर्गतात्ते वा वाचकाः ननु तत्स्मृता इत्यर्थः तथा हि पचतीत्यादौ लकारमविद्यो बोधानुतस्य वाचकत्वं न च तेषां तिङ् शक्तिभ्रमाद्बोधस्तस्य भ्रमत्वे मानाभावात् न आदेशिनामपि तद्वैयाकरणैः स्वेच्छया भिन्नभिन्नानामुपगमात् क. शक्तः को नेतिव्यवस्थानापत्तेश्च सर्वेषां शक्तत्वे गौरवव्यभिचारश्चास्त्येव आदेशानां प्रयोगान्तर्गततया नियतत्वाद्युक्तं तेषां शक्तत्वं तथा चादेशिस्मरण कल्पनात इति लाघवम्

वाचकमिति निर्द्धारणानुपपत्तेरित्यर्थः अनुशासनस्य पूर्वेषामपि सत्त्वादिति भावः सर्वेषामित्यस्य वि निगमकाभावादित्यादिः ननु तथाप्यादेशापेक्षयादेशिनामस्यत्वेन तत्प्रयुक्तलाघवादादेशिष्वेव वाचकत्वं सेत्स्यतीत्यत आह व्यभिचारश्चेति ननु विनिगमनाविरहादेवादेशिवाचकतासिद्धिरत आह आदेशानामिति, तथा च गौरवादिदोषस्य तत्परिहारस्य चोभयोः साम्यप्यादेशिस्मरणकल्पनाविरहप्रयुक्तलाघवसहकृतप्रयोगनैयत्यसत्त्वादादेशानां वाचकत्वे विनिगमकमित्यर्थः ॥ १ ॥

ननुबोधकतायाः शक्तित्वएव भवदुक्तव्यवस्थोपपत्तिः नचबोधकत्वस्यशक्तित्वंतन्मतसिद्धं किंतुसंकेतस्यपदार्थोन्तरस्यवातत्त्वम्
तथाचानुशासनेनयत्रसाप्रतिपाद्यतेतत्रैवतदंगीकारेणकथंतिबादिषुतत्सिद्धिः स्मरणकल्पनागौरवंतुप्रामाणिकत्वादपिनदुष्टमि
त्यस्वरसात्प्रयोगेश्रूयमाणानांतिबादीनांवाचकत्वेसाधकांतरमुपन्यस्यतीत्याह साधकांतरमिति मुख्यमिति मुख्यत्वंचतस्मिन्शक्ति
ग्राहकांतरनिरपेक्षत्वम् व्याकरणादिनाशक्तिग्रहे नियमेनतद्ग्राहकांतरापेक्षणात् सचेति व्यवहारजन्यशक्तिग्रहश्चेत्यर्थः तिङा
दिष्वेवेति व्यवहारेणपूर्ववाक्येतद्ग्रहेप्यवापोद्वापाभ्यांपश्चात्तद्घटकतिङादिष्वेवतन्निर्णयादितिभावः ननुप्रयोगांतर्गतवर्णेषु
सर्वसिद्धव्यवहारेणशक्तिग्रहेघटमानयेत्याद्यंतर्गतशबादीनामपिवाचकत्वा पत्तिर्नचसेष्टाविकरणानांनैरर्थक्यमितिसिद्धान्त
साधकांतरमाह व्यवहृतेरिति व्यवहारस्तावच्छक्तिग्राहकेषुमुख्यः सचश्रूयमाणतिङादिष्वेवेतितएववाचकाइत्य
र्थः किंचतद्धेतुत्वायतद्वतिलकारस्यबोधकत्वेभूलइत्यतोपिबोधःस्या॥ऽऽव्यार्कोपात् किंचानयनादिव्यवहारस्यलोडा
द्यंतप्रयोगंविनाऽसंभवेनतादृशप्रयोगांतर्गतवर्णानांतेनतत्त्वसिद्धावपितद्रहितवाक्यांतर्गतवर्णेषुवाचकत्वमनुशासनेनैवेष्टव्यं
तथाचतत्रादेशिनांवाचकत्वसिद्धावन्यत्राप्यादेशिषुसाकल्प्येत्यस्वरसादाह किंचेति तद्धेत्विति तद्धेतोरेवतत्त्वेकिंतेनेतिन्यायाका
रःलाघवमूलकश्चायंन्यायःउभयोर्हेतुत्वेगौरवात्तंसंगमयति लकारस्येति बोधापत्तिरिति भवनकर्तृबोधापत्तिरित्यर्थः नकेवलेति
न्यायात्केवललकारस्यप्रयोगानर्हत्वाद्भूइत्युक्तं लकारदशायांशपोऽसंभवान्नभवतीत्युपात्तं तथाचभवतीत्यत्रानुसंहिताल्लकाराद्य
थाकर्तृबोधस्तथाप्रत्यक्षश्रुतलकारादपिकर्तृबोधापत्तिरितिभावः नचासाधुत्वज्ञानंप्रतिबंधकंशक्तत्वरूपसाधुतायाश्चापिस
त्वादपभ्रंशादपिबोधोदयेनतदीयज्ञानस्या
प्रतिबंधकत्वाच्चेतिभावः॥

पदस्फोटनिरूपणउपजीव्योपजीवकभावस्यापिसंगतित्वंसूचयन्मूलमवतारयति एवमिति उक्तरीत्येत्यर्थः आदेशानामपिकेषां
चित्प्रयोगानंतर्गतत्वादाह तिप्वि सर्गादयइति प्रयोगांतर्गतवर्णाइतियावत् ननुतादृशयावद्वर्णानांवाचकत्वंकथंपदस्फोट
सिद्धिरतोभावार्थमाहायमिति समभिव्याहृतंतूक्तार्थे सि द्धइति आनुपूर्वीविशिष्टतावतांवर्णानामवाचकत्वे आनुपूर्वीरूपप
दस्यवाचकत्वाशादुराशेतिभावः ननुसमुदायस्यप्रत्येकानतिरिक्तत्वेनवाचकतायाः प्रत्येकवर्णविश्रामोवाच्यस्तथाचकथं

एवमादेशानांवाचकत्वेसिद्धेपदस्फोटोपिसिद्धएवेत्याह अथेतिआदेशास्तिब्विसर्गादयः अयंभावःसमभिव्या
हृतवर्णानांवाचकत्वेसिद्धेतादृशवर्णसमभिव्याहाररूपपदस्यवाचकतासिद्ध्यतिप्रतिवर्णमर्थस्मरणानुभ
वविरुद्धत्वात् प्रत्येकंवर्णानामर्थवत्त्वेनप्रातिपदिकत्वापत्तौनलोपः प्रातिपदिकांतस्येत्यादिभिर्धनंवनमित्या

११दौनलोपाद्यापत्तेश्च ॥

समुदिततादृशवर्णरूपपदस्यवाचकतेत्यतः प्रत्येकवर्णवाचकतांनिरस्यति प्रतिवर्णमि
ति अनुभवविरुद्धत्वादिति घटशब्दादमुमर्थंप्रत्येमीत्येवप्रतीतेरित्यर्थः साधकान्तरमप्याह प्रत्येकमिति अर्थवत्त्वइति तद
भ्युपगमइत्यर्थः नलोपादीत्यादिनाजश्त्वादिपरिग्रहः तथाचसमुदितानामेवतेषांवाचकत्वमभ्युपेयं तत्रचोक्तयुक्त्यातत्स
मुदायस्यवाचकत्वनिराबाधः सएवचास्माकंपदशब्दव्यपदेश्यइतिभावः ॥

१० ननु प्रत्येकवर्णानावाचकत्वस्यगौरवपराहतत्वादेवासंभवात्समुदायस्यैवनतेत्स्यतीत्यादेशावाचकाश्चेति समभिव्याहृ
तवर्णानावाचनाया हेतुत्वोपन्यासो विफल उन्मत्तप्रलपितत्वशङ्काया अवसरे णैवनिरासादित्यतआह एतच्चेति सम
भिव्याहृतवर्णानावाचकत्वोपन्यसनचेत्यर्थः चरमवर्ण एवेति पदांते श्रूयमाणवर्ण एवेत्यर्थः एवकारेणपदघट

एतच्च चरमवर्ण एव वाचकत्वशक्ति शक्तेर्व्यासज्यवृत्तित्वे मानाभावात् पूर्वपूर्वव
र्णानुभवजन्यसंस्कारश्चरमेणार्थधीजनने सहकारिण इति न तन्मात्रोच्चारणादर्
थधीरिति वर्णस्फोटवादिनामतांतरस्यदूषणायोक्तम् ॥ ६० ॥ ६० ॥ ६० ॥

कतत्त्वाकनवर्णव्युदासः तत्रहेतुमाह शक्तेरिति स्वरूपसंबंधात्मिकायाबोधकारणतायापर्याप्तत्वासंभवाच्चरमवर्णा
देववीभेदपेनान्यत्र तत्तत्वे मानाभावादितिवार्थः ननु तस्यैववाचकत्वे तन्मात्रश्रवणादर्थबोधापत्तिरतआह पूर्व
पूर्ववर्णेति तत्पदघटकपूर्वपूर्ववर्णेत्यर्थः मतांतरेति समभिव्याहृतवर्णानामवाचकत्वेतत्समुदायरूपपदस्यसु
तरामवाचकत्वमितियन्मतांतरं तत्खंडनायेत्यर्थः उक्तमित्यस्यमूलइतिशेषः अर्थबोधापत्त्येति चरमतत्तन्नेयमापत्ति

नस्यादिति स्थानिनो लकारस्योभयत्रैक्यादितिभावः नव्यैस्तायिकनयेतुनेयमापत्तिः तैः प्रयोगान्तर्गततिबादीनामेववाचकतायाअभ्युपगमात् धातुप्रत्ययलोपस्थलेतत्तदर्थबोधोपपादनंतूभयोः समप्रयत्नकमित्यवधेयं इत्यस्त्विति तथाचतदुभयशक्त्यैवक

लकारस्यैववाचकत्वेकृतिङोः कर्तृभावनावाचकत्वव्यवस्थात्वसिद्धा नस्यादित्याह किंचेति आदेशानांवाचकत्वेचतिङ्त्वेनभावनायांशानचत्वादिनाकर्तरिशक्तिरित्युपपद्यते विभागइतिभावः नचशानजादौकृतिर्लकारार्थः आश्रयः शानजर्थइत्यस्तु कर्तरिकृदित्यनुशासनादितिशंक्यम् स्यान्यर्थेननिराकांक्षतयाशानजादौकर्तरीत्यस्याप्रवृत्तेः अन्यथाघञादावपिप्रवर्तेत ६०॥

र्तृलाभः कृत्याश्रयस्यैवकर्तृत्वादितिभावः अन्यथेति अनाकांक्षेपिशास्त्रप्रवृत्तावित्यर्थः शक्ततावच्छेदकभेदस्यतत्रापिसत्वादितिभावः॥

सामानाधिकरण्यानुरोधादिति शानचः कृतिवाचकत्वे सर्वानुभवसिद्धाभेदान्वयबोधानुपपत्तेरित्यर्थः लडादेशत्वबोधनफलं धा
त्वर्थे वर्तमानत्वप्रतीतिरेवेति बोध्यम् पचतिकल्पमिति इदं च सत्वप्रधानानि नामानीति निरुक्तादिद्रव्य
विशेष्यकबोधजनकत्वं नामत्वम् तदेव च नामार्थयोरिति व्युत्पत्तिघटकं अत एव निपातार्थस्य भेदान्वय इति मतेनेदं दूषणमि

देवदत्तः पचमान इत्यादिसामानाधिकरण्यानुरोधाच्छानच कर्तावाच्यः स्यादित्याशङ्क्याह नरवाद्यन तिङ्श्च
सिनामता कृत्स्विवसुयः नामार्थयोर्भेदोपि तस्मात्तुल्योऽवधार्यताम् ॥१॥ शादेशावाचकास्तेऽपदस्फोटस्तत एव तः
पचति न ऐमेत्र पचतिकल्पमित्यादिषु नामार्थत्वाभेदान्वययोः सम्भव एवेति कर्तृवाचकता स्यादिति भावः तथा प
चतिकल्पमित्यत्र सामानाधिकरण्यानुरोधात्कर्तरि लक्षणा पचमान इत्यत्राप्यापत्तेरिति ल. कर्मणीत्यनुशासनं च
लाघवात्कल्पिते लकारे कर्त्रादिवाचित्वकल्पितमादाय सूक्तम् इति वर्णस्फोटनिरूपणम्॥

॥ तिनुपरे लक्षणेत्यस्य लस्येति शे
पः आपत्तेरिति न च सा तत्वे ष्टेनि भाव नन्वादेशानां वाचकत्वे आदेशिशक्तिमति पारकलः कर्मणीत्यादिसूत्राणवैयर्थ्यमत आह ल. क
र्मणीति उक्तमिति आस्यात शक्तिनिरूपणावसर इति शेष एवं च प्रयोगे श्रूयमाणप्रकृतिप्रत्ययघटकवर्णेषु शक्तिर्वर्णस्फोट
तिपर्यवसन्नम् इति भूषणसारदर्पणे वर्णस्फोटनिरूपणम् ॥

उद्बोधकत्वकल्पे दूषणान्तरमप्याह रामोऽस्तीत्यादि समभिव्याहारस्य फलानुमेयत्वेन तादृशस्थले फलाभावेनोद्बुद्धसंस्काराभावादिति बोध्यम् ननु
मभिव्याहारेण समूहः वर्णानां क्रमिकाणामाशुविनाशिनां च तदसंभवात् तत एवाव्यवहितोत्तरत्वसंबंधेन न पूर्वपूर्ववर्णवत्त्वं पूर्वपूर्ववर्णेऽस्ये
वाभावात् नापि वर्णसमवेतं पदार्थान्तरं मानाभावात् अन्यथा तादृशधर्मानुगतीकृतवर्णानां वाचकत्वेनैवोपपत्त्या पदस्फोटस्य निरालंबनता
पत्तेः पदप्रयुक्तकार्याणां वर्णेष्वदर्शनाच्चेति कथं पदस्फोटसिद्धिरित्यत आह दिगिति तदर्थस्तु वर्णसमुदायः पदं न वर्ण इति

रामोऽस्तीति वक्तव्ये राम् इत्यनन्तरं घटिकोत्तरमकारोच्चारणेऽर्थबोधा
पत्त्या तादृशानुपूर्व्या एव शक्ततावच्छेदकत्वौचित्यादिति दिक् ॥ ६१ ॥

प्रतीतेर्वर्णातिरिक्तपूर्वापरीभूततत्समुदायात्मकपदस्वीकार आवश्यकः अत एव पदे वर्ण इति व्यवहारोऽपि स्वरसतः संगच्छते
नित्याश्च वर्णास्तेषु पौर्वापर्यञ्च पूर्वपूर्ववर्णानुसंधानस्याव्यवहितोत्तरत्वसंबंधेनोत्तरोत्तरवर्णानुसंधाने वाक्यस्फोटवक्ष्यमा
णरीत्या सत्त्वात्तेन स्वविषयकानुसन्धानविशिष्टानुसन्धानविषयत्वरूपमिति नानुपपत्तिरिति यथा चैतत्तथा वाक्यस्फोटनिरू
पणे वक्ष्यत इति तथा च वर्णसमुदायो वाचक इति पदस्फोटपक्षे पर्यवस्यति

पारिभाषिकेति शास्त्रकारसंकेतितेत्यर्थः पूर्वं तु प्रकृतिघटकवर्णसमुदायरूपस्य प्रत्ययघटकवर्णसमुदायरूपस्य च तस्य वाच
तोक्ता इदानीं तूभयसमुदायस्यैवेति भेदः घटेनेति घट इति प्रकृतिरेनेति प्रत्यय इति प्रकृतिप्रत्यययोर्विभागस्य ज्ञानासंभ
दिति योजना सर्वे सर्वपदेति वर्णनित्यताप्रतिपादकभाष्यमेतत् वस्त्रसादेरपि पक्षत्वादाह व्याजेनेति तथा च निश्चितसाध्यव
त्वस्यैव दृष्टान्तत्वे तन्नत्वेन तस्य पक्षभिन्नत्वाभावेपि न दृष्टान्तत्वमनुपपन्नमिति भावः तत्रावस्त्रसादिस्थले विभागस्तन्निर्णय
स्य वैयाकरणानामपीति शेषः परे तु आमादौ प्रत्ययत्वस्य दृष्टत्वेन वामित्यादावामोव इत्यादेर्वसादेः प्रत्ययत्वमितरांशस्य प्र

सुप्तिङन्तं पदमिति परिभाषितपदस्य वाचकत्वं स्वीकर्तॄणां मतमाह घटेनेत्यादिषु न हि प्रकृत्यादिभिदास्थिमाव
स्त्रसादाविवेहापि संप्रमोहो हि दृश्यते २ घटेनेत्यादौ घट इति प्रकृतिर्नेति प्रत्यय इति प्रकृतिरेनेति प्रत्यय इति
विभागस्य सर्वे सर्वपदादेशा इति स्वीकारे विशिष्य प्रकृतिप्रत्यययोर्ज्ञानासंभवान्न वाचकत्वमित्यर्थः वैयाकरणे
विभागः सूत्रे यद्यपि तोदृष्टान्तव्याजेनाह वस्त्रसादाविति बहुवचनस्य वस्त्रसाविति समुदायस्यादेशविधानान्ना
नतद्विभागः संभवतीत्यर्थः

कृतित्वमनुमातुं शक्यमित्युक्तरीत्या न प्रकृतिप्रत्ययसमुदायरूपपदस्य वाचकत्वसिद्धिः
घटेनेत्यत्र तु न शब्दस्यादेशत्वं भाष्यकृतैवोक्तमिति न तत्र विभागासिद्धिरजर्पोश्च चक्षुरित्यादौ त्वगत्या शिष्यमाणं लुप्यमाना
र्थाभिधायीति न्यायात्प्रकृतेरेव वाचकतास्तु यत्र त्वापि तु न प्रत्ययानुसंधानाद्बोधः प्रकृतेः स्वार्थविशिष्टप्रत्ययार्थे लक्षणा वा सर्वे
सर्वपदादेशा इत्यपि वर्णाः नित्यत्ववादिनां दूरापास्तमित्याहुः॥

प्रुक्तेरैक्यात्क्रमशः प्राप्तं वाक्यस्फोटनिरूपणमित्याशयेन मूलमवतारयति सुप्तिङ् इति तत्॥ वाचकत्वं समुदाय इति पदसमुदायरूपे वाक्य इत्यर्थः एवमिति वाक्यशक्तिवदित्यर्थः विशिष्य सूत्रोपात्तरूपेण अज्ञायमानेष्वित्यनेन तन्निष्ठबोधकत्वज्ञानासंभवः सूच्यते समुदायव्युत्पत्त्येति समुदायस्य वाचकत्वग्रहेणेत्यर्थः बोधनं प्रकृत्यर्थविशिष्टप्रत्ययार्थबोधादित्यर्थः तत्रापि सुप्तिङ्न्तरूपपदेऽपि शाक्तिरिति तत्कल्पनेत्यर्थः ननु घटेनेत्यादिमूलेन समयुक्तिकस्फोटद्वयोपादानात्कथं पदस्फोटस्याप्येवं वाक्यस्फोटस्य दृष्टान्तत्वं किंच प्रथमं पदस्फो

सुप्तिङ्न्तचयरूपवाक्यस्यापि तदाह हरेवेत्यादि दृष्टांच वाक्यस्फोटं विनिश्चिनु अर्थे विशिष्य संबंधाग्रहणं चेत्
समं पदे लक्षणाद्धुना चेन्नत्वदेप्यर्थेषु न तथा हरेवविष्णोवेत्यादौ पदयोरेङः पदान्तादतीत्येकादेशे सति
न तद्विभागः सुज्ञानः तथाच प्रत्येकं पदाज्ञानेपि समुदायशक्तिज्ञानाच्छाब्दबोधात्समुदाये आवश्यिकी शक्तिः ए
वं प्रकृतिप्रत्ययेषु विशिष्याज्ञायमानेष्वपि समुदायव्युत्पत्त्या बोधात् तत्राप्यावश्यिक्येव शक्तिरिति भावः वस्तुतः पदे प
दार्थबोधवद्वाक्ये न वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थे शक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फो
टौ व्यवस्थितौ

रासिद्धौ तदर्थसंबंधरूपवाक्यार्थाप्रसिद्ध्या वाक्यशक्तिकल्पनावसर इत्याद्यपरितोषात्पदस्फोटमेव दृष्टान्तीकृत्य वाक्यशक्तिं साधयति वस्तुत इति तथाच यत्र पदोपस्थित्या पदशक्तिग्रहसंभवस्तत्र पदसत्त्यैव वाक्यार्थबोधो यत्र तदसंभवो हरेवेत्यादौ न चानापत्त्या वाक्यस्यैव शक्त्यैव शक्तेनद्बोध इति यद्यपि व्यवस्थितावितिपदमहिम्ना पक्षद्वयं व्यवस्थितमिति लभ्यते तथापि आवश्यकवाक्यस्फोटेनैवोपपत्तौ पदस्फोटकल्पनं नावश्यकमिति सिद्धान्ते वाक्यस्फोट एव पर्य्यवस्यतीति बोध्यम्॥

वाक्यस्फोटस्यावश्यकतामेव दर्शयति अन्यथेति वाक्यशक्त्यनभ्युपगमे इत्यर्थः तादृशेति वाक्यार्थबोधजनकत्वरूपवाक्यशक्तिज्ञान-
रहितस्यापीत्यर्थः तत्सत्त्वे तु नत्रापि बोधप्रसङ्ग एवेति भावः बोधप्रसङ्गः घटकर्मकानयनानुकूलकृतिबोधापत्तिरित्यर्थः पदवृत्तिज्ञा-
नजन्यपदार्थोपस्थितेः सत्त्वादिति भावः घटमानयेत्यत्रैवेति अत्र तादृशव्युत्पत्तिरहितस्येत्यनुषज्यते ननु शाब्दबोधकारणीभूत-
तात्पर्यज्ञानरूपपदकार्याकारणाभावादेव न बोधः तत्राह सत्यपीति बोधाभावादिति तादृशबोधाभावादित्यर्थः तथा च पदभावा-

अन्यथा घटः कर्मत्वमानयनं कृतिरित्यादौ तादृशव्युत्पत्तिरहितस्यापि बोधप्रसङ्गः घटमानयेत्यत्रैव पदार्थो-
पस्थितौ सत्यपि तात्पर्यज्ञाने बोधाभावाच्च तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तर-
कर्मत्ववाचकविभक्त्युत्तरधातोः तत्र स्वार्थानुसमभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतो बोधजन-
नमपि हेतुरिति चेन्न हि सिद्धो वाक्यस्फोटः घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानकार्यकारणभावस्येव वि-
शिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात् ॥ ५ ॥

त्कार्याभावस्तस्य तद्धेतुतया वाक्यशक्तिरावश्यकीति भावः एतेन व्यतिरेकसहचारकारणतामाहकः प्रदर्शितः अन्वयं प्रदर्शयन्
वाक्यशक्तिं व्यवस्थापयति तत्रैवेति घटमानयेत्यत्रैवेत्यर्थः बोधादित्यनेन स्वरूपसतो हेतुत्वव्यवच्छेदः तादृशसकाङ्क्षनिष्ठ-
बोधहेतुमसिवासमन्मनेवाक्यशक्तित्वेनाकाङ्क्षाशक्तिरिति परिभाषाभेदेऽपि वाक्यस्फोटसिद्धिर्निराबाधेत्याशयेनाह तथेति ॥

ननु शाब्दबोधे हेत्वर्थोपस्थितिजनकत्वं शक्तित्वं ननु पद एव न वाक्ये तन्निष्ठबोधकताया स्तादृशोपस्थित्यजनकत्वादत आह अर्थोप
स्थापकेति शाब्दवृत्तीति शब्दनिष्ठं यद्बोधकारणत्वमित्यर्थः तथा चोपस्थितौ शाब्दहेतुत्वनिवेशे एतत्कल्पे प्रयोजनाभावेन तज्ज्ञान
स्य तादृशोपस्थित्यजनकत्वेपि शक्तिताक्षतेः बोधकशब्दस्य शाब्दत्वेन निवेशाच्चापभ्रंशस्यापि संग्रह इति भावः ननु वाक्यशक्तिवा
दिमते संसर्गरूपवाक्यार्थस्य नानात्वात्तद्भेदेन शक्त्यानंत्यम् किंच पदवृत्त्या वाक्यशक्तिं विनापि वाक्यार्थबोधजननाद्वाक्यशक्तिग्र
हस्य तद्धेतुतायां व्यभिचारः अखण्डवाक्यपक्षस्तु नेदानीं प्रक्रांतः कार्य्यतावच्छेदकेव्यवहितोत्तरत्वानिवेशेन तद्वारणेप्यनुपस्थितसं
सर्गे वाक्यशक्तिग्रहः शाब्दबोधात्प्रागसंभवीति कथं तस्य कारणतेति चेत् सत्यं संसर्गस्य विशिष्यानुपस्थितावपि तदादिवत्का
अर्थोपस्थापकज्ञानविषयशब्दवृत्तिज्ञानकारणत्वस्यैव शक्तित्वात् युक्तं चैतत् विषयतासंबंधेन शाब्दबोधमात्रे वृत्तिज्ञान
स्य लाघवेन हेतुत्वसिद्धेः विवेचितं चैतद्दूषणे॥ ११ एकविभक्तिविशिष्टधातुपदकारकविशिष्टक्रियाबोधकमिति सामान्यत
स्तद्ग्रहात् तात्पर्य्यग्रहस्य त्वयाप्येवमेव वाच्यत्वात् अनंतरं पदविशेषसमभिव्याहारेण तात्पर्य्यवशात्संसर्गविशेषेण तत्कारक
विशिष्टतत्क्रियाभानं नापि संसर्गानंत्यप्रयुक्तशक्त्यानंत्यम् — — — संबंधत्वस्यानुगमकस्य सत्त्वात्तत्तत्पदघटितसमभि
व्याहारस्य नियामकताप्युभयोः समैवेति तन्मतनिष्कर्षः ननु स्यादेवोक्तप्रकारेण यद्वाक्यनिष्ठबोधकतायाः शक्तित्वं सप्रमाणं सा
न देवत्तु नेत्यत आह युक्तं चैतदिति एतत् वाक्यनिष्ठबोधकत्वस्य शक्तित्वमुपयुक्तिमेवाह विषयतेति शाब्दबोधमात्रे तत्सामान्यइ
त्यर्थः वृत्तिज्ञानस्येति वृत्तिज्ञानजन्योपस्थितेरित्यर्थः विषयतासंबंधेनेत्यनुषज्यते लाघवादिति अन्यथा घटपदशक्तिमवि

दुपस्थितस्य ज्ञानवत्तो घटमानयेति वाक्याद्बोधापत्त्या घटशाब्दबोधे घटार्थकपदवृत्तिज्ञानजन्योपस्थितित्वेन हेतुतावाच्यत्यर्थभेदेनानंत
कार्यकारणभावकल्पने गौरवम् असन्मते तु विषयतासंबंधेन घटवृत्तिज्ञानजन्योपस्थितेरसत्वान्न शाब्दे तस्य भानमित्येक एव का
र्यकारणभाव कल्प्यत इति लाघवादित्यर्थः ननु घटघटत्वयोर्विशेष्यविशेषणभावे विपरीतस्तु स्यन्न स्य घटमानयेत्यतो घटत्वविशिष्टबोधभव
रणाय घटत्वविशिष्टबोध्योपस्थिते घटपदवृत्तिज्ञानजन्यघटत्वविशिष्टाया हेतुताया अवश्यवाच्यतया तत एवानतिप्रसंगे उक्तकार्य
कारणभावे मानाभावोऽत आह विवेचितं चैतदिति पदपदार्थभेदेनानंतकार्यकारणभावप्रवृत्तिप्रवेशमपेक्ष्योपस्थितेः पदज्ञानजन्यत्वे
नैव शाब्दसामग्रीकुक्षौ प्रवेश उचितस्तथा सति समवायेनाकाशस्य जनकतयोपस्थितस्य देवदत्तादेश्च शाब्दे भानवारणाय विषयतया शा
ब्दसामान्ये वृत्तिजन्योपस्थितेर्विषयतया हेतुत्वं वाच्यम् एवं च संसर्गस्य शाब्दे भानानुरोधेन संसर्गे तिवृत्तिकल्पनमावश्यकम् तथा च पदे
पदार्थानां वाक्येन वाक्यार्थस्य बोध इति नविशेष्यविशेषणव्यत्यासेन शाब्दबोधे पदार्थानां भानं पदोपस्थितानामेव संसर्गस्य वाक्यशक्त्या बो
धादिवृत्तिज्ञानस्येति यथाश्रुतार्थकमेव तत्र विवेचितम् वस्तुतस्तु वृत्तिज्ञानस्येत्यनेन मनुष्यकविषयतासंबंधेनेत्यस्य वृत्तिज्ञानविषयत्वो
धकत्व घटकबोधोपविषयतासंबंधेनेत्यर्थः अन्यथा वाक्यवृत्तिज्ञानजन्योपस्थितेरेव शाब्दबोधत्वेन तत्सिद्धेन संबन्धेन न हेतुत्वा
संभेन वाक्यशक्तेर्गर्भस्रावादिति बोध्यम् अत्र वदन्ति पदजन्यपदार्थोपस्थितिमन्तरेण शाब्दबोधानुदयात्तादृशपदार्थोपस्थिते
शाब्दबोधे हेतुत्वे न तावन्निर्विवादं पदस्य च प्रकृत्यात्मकस्यार्थसंबंधं विना तदुपस्थापकत्वासंभवात्तस्मिन्वृत्त्यात्मकसंबंधो
प्यावश्यक एव ननु तत्समुदायरूपपारिभाषिकपदस्य तत्समूहरूपवाक्यस्य विशिष्टार्थसं–त विना पि तेभ्य आकांक्षादिरूपकार
णसमवधानादेव विशिष्टबोधोपपत्तेः एकपदार्थविशिष्टापरपदार्थशाब्दत्वस्यैव तत्कार्यतावच्छेदकत्वात् अनुगमकाद्वृत्तिज्ञान

तथाहि तादृशकार्यकारणभावे वृत्तिज्ञ
जन्योपस्थितेर्विषयतासंबंधेन हेतुत्वमेव वाक्यशक्तौ प्रमाणमिति तन्न स्वातंत्र्येण तद्धेतुत्वस्यैवासिद्धेः तथाहि तादृशकार्यकारणभावे वृत्तिज्ञ
नपदवृत्तेर्निवेशः किंवा वाक्यवृत्तेः किंवा वृत्तिमात्रस्य न तावदाद्यः पदवृत्तिज्ञानजन्योपस्थितेः शाब्दहेतुत्वस्य सर्वैरेवाभ्युपगमात् न द्वि
तीयः वाक्यवृत्तेस्ततः प्रागसिद्धेः अत एव न तृतीयः किंच तव मते वाक्यशक्तिजन्योपस्थितेः शाब्दबोधात्मकत्वेन तस्मिंस्तद्विषयत्वा
संभवादपि नोक्तरीतिः साधीयसी अपि च वाक्यवृत्तिज्ञानस्य शाब्दसामान्येन स्वातंत्र्येण हेतुत्वं यदा कदाचिद्दुर्वर्णादिना घटादिपदश
क्तिज्ञानजन्यपदार्थोपस्थितिवृत्त्यापि घटमानयेति वाक्यशक्तिमविदुषस्त्राकांक्षादिवशाच्छाब्दबोधोदयेन व्यभिचारात् यदपि सम
भिव्याहाररूपाकांक्षैव वाक्यमिति तदपि न तथा सति घटीयाकर्मता इत्यादिबोधे घटमानयेति वाक्यं साकांक्षं निराकांक्षं च घटः कर्मत्व
मिति ~ ~ ~ सर्वसिद्धव्यवहारानुपपत्तिः पदयोः समभिव्याहार इति वत्पदयोर्वाक्यमिति व्यवहारप्रसंगश्चेति समभिव्याहृतप
दानामेव वाक्यत्वमुपगन्तव्यम् तथा च समभिव्याहारस्य शाब्दबोधहेतुत्वेपि वाक्यस्य तत्त्वं दुरुपपादमेवेति न वाक्यशक्तिसिद्धिः।
समभिव्याहारनिष्ठबोधजनकत्वग्रहवतो बोधे तज्ज्ञानं हेतुरित्यपि रिक्तं वचः अन्वयव्यतिरेकाभ्यां समभिव्याहारज्ञानस्यैव शाब्द
धीहेतुत्वेन तन्निष्ठबोधजनकत्वज्ञानस्य हेतुतायामानाभावात् न च तदपि सम्भवति शाब्दबोधात्प्राक् संसर्गस्यैवानुपस्थितेः सामान्यतस्त
दुपस्थितावपि विशेषरूपेण भानार्थं तात्पर्यज्ञानाद्यपेक्षणे च मूलशैथिल्यात् एव वाक्यशक्तेरेवासिद्ध्यापत्तिः वक्ष्यमाणरीत्या शाब्दबोधा
त्प्राक् तदुपस्थित्यभ्युपगमे वाक्यवृत्तिज्ञानजन्योपस्थित्यनंतरं शाब्दबोधाभ्युपगमे वा शाब्दप्रामाण्यभंगापत्तिः अनधिगतार्थग्राहका
णस्यैव प्रमाणत्वात् अत एव सूत्रकृता कृत्तद्धितसमासाश्चेत्यत्र समासग्रहणं कृतम् वाक्यशक्तौ तु न द्वैयर्थ्यस्पष्टमेव सामयिकः श
ब्दादर्थप्रत्यय इति कणादोक्तेर्वाक्यशक्तिग्राहकानुशासनादेरभावेन तद्ग्रहासंभवाच्चेति वाक्यस्फोट आपातरमणीय एवेति ॥~॥

पूर्वोक्तशक्तिग्रहप्रकारस्य शैथिल्यमनतिनिर्धाय तस्मिन्प्रकारान्तरं वक्तुमग्रिमग्रन्थ इत्याशयेनाह नन्विति अपूर्वत्वात् शाब्दबोधात्प्रागनुप
स्थितत्वात् ननु शाब्दबोधात्पूर्वं पदे प्रत्यक्षाद्युपस्थितपदार्थनिरूपि     त शक्तिग्रहः सुलभ एवेति पदेसममिति मूलमनुपपन्नमतआ
शयं प्रकाशयति पद एवेति पदानामेवान्वितपदार्थे शक्तिरन्वयश्च सामान्यरूपेण ज्ञान अत एव घटादिपदादन्वितघटाद्युपस्थि
तौ नियमनन्तरमतियोग्याकाङ्क्षा भवति किमन्वितो घट किमन्वितकर्मत्वमित्याद्याकारा सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रका
रकजिज्ञासाजनकत्वात् विशेषरूपेण भानं त्वमादिपदसमभिव्याहारो नियामकोऽत एवतस्य शाब्दे भानम् पदवृत्तिविषयत्वात् अ

ननु वाक्यार्थस्यापूर्वत्वात्कथं तत्र शक्तिग्रह इत्याशंक्याह अर्थेति वाक्यस्येति शेषः वाक्यस्य वाक्यार्थे विशिष्य शक्त्य
ग्रहणे चेत्तर्हि पदेपि समं पद एवान्वयांशेपि शक्तिरिति पक्षेपि तद्ग्रहासंभवस्तुल्य इत्यर्थः यदि च पदशक्तिः पदार्थां
शे ज्ञाना अन्वयांशे चाज्ञातोपयुज्यत इति कुत्र शक्तिवादस्तदा ममापि वाक्यस्य शक्तिरज्ञाने वोपयुज्यत इति वाच्याभ्यु

शक्यस्यापि भानातिप्रसङ्गात् नञेव घटमानयेत्यत्रेतरान्वितकर्मत्वमितिरीत्यानेकधा संसर्गस्य भानाप "पगमस्तुल्य इति भावः॥
तिसन्त     त्पदेभ्यस्तथार्थोपस्थिता यथाकाङ्क्षावशादेकधैव तज्ज्ञानप्रसंगात् नआकाङ्क्षायास्तज्ज्ञाननियामकत्वावश्यकत्वेन तत्र वृत्ति
कल्पनापार्थंतिवाच्यम् अशक्यभानभियैव तदभ्युपगमात् तथा च पदशक्त्यैव संसर्गभानोपपत्तौ तत्र न वाक्यशक्तिमद्त्वापेक्षा
या वाक्यस्य गुरुत्वाच्चेति तन्मतं तथा चान्विताभिधानमतेपि पदे वाक्यार्थशक्तिग्रहासंभव समान इत्यर्थः ज्ञातेति पदार्थानां प्रागुपर्द्द
त्वात्तत्र पदार्थशक्तिग्रह सुभगादिति भावः अज्ञानवतिरच्यभ्युपगमस्तु शाब्दे भानापत्त्यैवेति भाव॥ ॥ ६०॥

